# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES

Nos. 356, 361, 365, 366, 369, and 371.




# Sama Veda Sanhita,

WITH THE COMMENTARY OF

SA'YANA A'CHA'RYA.

EDITED BY

SATYAVRATA SA'MAS'RAMI'.

EDITOR OF THE HINDU COMMENTATOR.

VOL. IV.

CALCUTTA. 

PRINTED BY N. K. SIRCAR, AT THE GANEŚA PRESS.

1877.

# सामवेदसंहिता

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता,

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

चतुर्थो भागः।

॥ उत्तरार्च्चिकः ॥

चतुर्थादि-प्रपाठक-त्रयात्मकः ॥

कलिकाता

गणेशयन्त्रे मुद्रितः।

अब्दाः १८१५।

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥

[ ख ]

मन्त्रप्रतीकम् — पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|
| आतेवत्सो ( ४, २, १२, १ = ऊ ४, १, १७ ) .. ... | १५५ |
| आत्वारथे ( ६, २, ५, २ = ऊ आत्वासख्यम् ) ... ... | ४५२ |
| आत्वासख्यम् ( ६, २, ५, १ = ऊ ७, १, १४—१८, २, १२—१३, ३, ३ ) | ४५२ |
| आदित्यैरिन्द्रः ( ४, १, २३, ३ = ऊ० ) .. ... ... | ९९ |
| आनःसुतास ( ५, २, १७, ३ = ऊ ५, २, १७—११, २, १९ ) .. | ३४८ |
| आनःसोमसंयतं ( ४, २, ७, ३ = ऊ प्रोष्ययासी० ) .. ... | १३३ |
| आनस्तेगन्तु ( ६, २, २०, १ = ऊ ११, १, १६ ) ... .. | ५०९ |
| आपवमानधारय ( ५, १, ४, ८ = ऊ० ) ... ... ... | १८८ |
| आपवस्वमहिन्तम ( ५, १, ५, ४ = ऊ० ) ... ... | १९१ |
| आपामासोविवस्वतो ( ४, २, १, ८ = ऊ प्रकाव्यमुशनेव ) ... | १०८ |
| आमन्द्रमा ( ४, २, २, ११ = ऊ० ) ... ... .. | १२१ |
| आमासुपक्कमैरय ( ६, २, १९, २ = ऊ० ) .. .. .. | ५०७ |
| आमिचे वरुणे ( ४, २, २, ८ = ऊ० ) ... ... ... | ११९ |
| आयङ्गौःपृश्निर् ( ६, १, ११, १ = ऊ० ) .. ... ... | ४२८ |
| आयद्दुवः ( ४, १, १४, ३ = ऊ ३, २, ७ ) ... ... .. | [illegible] |
| आययोस्त्रिंशतं ( ४, १, ५, ४ = ऊ० ) ... ... ... | १९ |
| आरयिमा ( ४, २, २, १२ = ऊ० ) .. ... ... | १२२ |
| आवच्यस्वमह्नि ( ४, १, ३, २ = ऊ० ) .. .. ... | ८ |
| आसुतेसिञ्चत ( ६, ३, १६, १ = ऊ० ) ... ... ... | ५११ |
| आसोतापरि ( ६, २, ६, १ = ऊ २, २, १—७, १, १७—१२, १, १३ ) | ४५८ |
| | |
| इदंवामहिरं ( ४, १, १०, ३ = ऊ० ) .. ... .. | २९ |
| इदंश्रे ष्ठञ्ज्योतिषाञ्ज्योतिरुत्तमं ( ६, ३, ५, ३ = ऊ० ) ... ... | ५२७ |
| इन्द्रःसदामने ( ५, १, १०, २ = ऊ० ) .. .. ... | २०६ |
| इन्द्रक्रतुम ( ६, २, ६, १ = ऊ ९, १, १७—१९—९, २, १—१९—<br>१९, २, १—५ ) ... ... ... | ५२८ |
| इन्द्रमीशानम् ( ५, १, २०, १ = ऊ ५, १, १३—२२, २, २० ) ... | १५८ |

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|
| उदुत्येमधुमत्तमा ( ६, १, ६, १ = ज ६, १, १६ ) ... ... | ४०५ |
| उभेद्वदभि ( ६, ३, ४, १ ज १४, १, १६ ) .. .. ... | ५२१ |
| उद्यस्यते ( ५, १, ९, ३ = ज० ) .. ... ... | १९९ |
| उपनःसमना ( ४, १, १५, २ = ज० ) .. ... ... | |
| उपप्रक्षे ( ४, १, १, २४, २ = ज ३, २, १९ ) ... ... | |
| उपप्रयन्तो ( ६, २, १, १ = ज० ) ... ... ... | |
| उपह्वरेषु ( ६, ३, १६, ३ = ज० ) ... ... ... | |
| उपोमतिःपृच्यते ( ६, १, ९, २ = ज ६, १, २१—९, २, ११ ) ... | |
| उपोषुजातम् ( ५, २, २०, १ = ज ६, १, ५—१९, २, ११ ) . | |
| उभयंशृणवच्च ( ५, १, १४, १ = ज ४, २, १६—१८, २, ७ ) ... | |
| उभेयदिन्द्र ( ४, १, १६, १ = ज० ) ... ... ... | |
| उरुगव्युतिर् ( ६, २, ११, ३ = ज ७, २, १७ ) ... ... | ४७७ |
| उस्रावेद ( ४, १, ५, २ = ज० ) .. ... ... | १८ |
| ऋतमृतेन ( ६, ३, १२, २ = ज० ) ... .. ... | ५४० |
| ऋषिमनाय ( ५, १, १, २ = ज भिप्राञ्जसानं चर्षतं ) ... ... | १९५ |
| एतन्त्यं हरितो ( ५, १, ४, ६ = ज० ) ... ... ... | २८३ |
| एतन्त्रितस्य योषणो ( ५, २, ४, २ = ज० ) .. ... | २८१ |
| एतमुत्यन्दशक्षिपो मृजन्ति ( ४, १, १३, १ = ज ३, २, ७—२३, २, १४ ) | ५० |
| एतमुत्यन्दशक्षिपो हरिं ( ५, २, ३, ८ = ज० ) ... ... | [illegible] |
| एतम्मृजन्ति ( ५, २, ३, ३ = ज० ) ... ... ... | [illegible] |
| एतेसोमाअभि ( ५, १, २, २ = ज० ) .. ... ... | |
| एतेसोमाअसृक्षत ( ४, १, ६, १ = ज० ) ... ... ... | [illegible] |
| एतोन्विन्द्रंस्तवाम ( ६, २, ९, १ = ज ७, २, १२ ) ... ... | ४६७ |
| एन्द्रनोगधि ( ५, १, १९, १ = ज ५, १, १२ ) ... ... | २५२ |
| एमेनम्प्रत्येतन ( ६, ३, २, २ = ज १०, १, १—११, १, १२ ) ... | ५१५ |
| एवामृताय ( ६, १, ८, २ = ज परिप्रधन्व ) .. ... | ४१३ |

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|
| तत्सवितुर्वरेण्यं ( ६, ३, १०, १ = ऊ० ) … … .. | ५३७ |
| तदिदास ( ६, ३, १९, १ = ऊ १२, २, १२ ) … … | ५५३ |
| तन्त्वामदाय ( ४, १, ३, ८ = ऊ० ) … … … | ११ |
| तन्त्वाविप्रा ( ४, १, ११, १ = ऊ० इन्द्रायेन्दो ) … … | ३० |
| तन्त्वागोपिष्ठ ( ४, १, २२, १ = ऊ अग्ने त्वमो ) … .. | ९६ |
| तमग्निमस्तो ( ६, १, १०, २ = ऊ० ) … … … | ४२६ |
| तमिद्वर्द्धन्तु ( ५, २, १०, २ = ऊ ६, १ ५—१९, २, ११ ) .. | ३७१ |
| तमिन्द्रं वाजयामसि ( ५, १, १०, १ = ऊ० ) … … | २०० |
| तमीडिष्वयो ( ४, २, ६, १ = ऊ० ) .. … … | १२९ |
| तमुत्वानूनं ( ६, २, १०, २ = ऊ ७, १, १८—१६, १, ७—१८, २, १४ ) | ४७६ |
| तन्त्रपवस ( ६, ३, १, १ = ऊ० ) .. .. … | ५१३ |
| तरत्सभन्दी ( ४, १, ५, १ = ऊ० ) … … … | १७ |
| तवक्रत्वा ( ४, १, ४, ६ = ऊ० ) … .. … | १५ |
| तवत्यदिन्द्रो ( ५, १, ११, २ = ऊ अध्वर्यो अद्रिभिः ) .. … | २०३ |
| तवद्रप्साउद ( ५, २, १७, २ = ऊ ५, २, १७—११, २, १९ ) … | ३४७ |
| तानःमन्नं ( ४, २, ४, १—६, ३, १३, १ = ऊ० ) … | १२७, ५३९ |
| तानोवाजवतीर् ( ४, २, ६, ३ = ऊ० ) … … .. | १३० |
| तेतस्यसन्तु ( ६, २, १७, ३ = ऊ ८, १, १२ ) … … | ५०० |
| तेजीमतस्वम् ( ६, ३, १६, २ = ऊ० ) … … … | ५५१ |
| तेनःसहस्रिणं ( ५, १, २, ६ = ऊ० ) .. … … | १८२ |
| तेमोर्हिष्ठं ( ४, २, ११, ३ = ऊ० ४, १, १६ ) .. … | १५४ |
| तेपूतासोविपश्चितः ( ४, १, २०, २ = ऊ सोमाःपवन्त ) … | ७९ |
| तेविश्वा ( ४, १, २, ३ = ऊ० ) .. … … | ७ |
| तेस्वामदेव ( ४, १, ८, ३ = ऊ० ) … … … | २६ |
| तोशाधारयथावाना ( ४, १, १०, २ = ऊ० ) … … | २९ |
| त्रिं महान्विराजति ( ६, १, ११, ३ = ऊ० ) … … | ४३० |
| त्रिकद्रुकेषुमहिषो ( ६, ३, १०, १ = ऊ० ) … … | ५५८ |

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम्          पृष्ठम्

मन्त्रप्रतीकम् | पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ ७॥

## ॥ अथ सप्तमोऽध्यायः आरभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २
ज्योतिर्यज्ञस्यपवतेमधुप्रियं
३ २ ३ १ २ ३२ ३ १ २
पितादेवानाञ्जनिताविभूवसुः।
१ २ ३ १ २ ३ १ २ ३क २र
दधातिरत्नꣳस्वधयोरपीच्यं
३ १ २ ३ १ २ ३ १र २र
मदिन्तमोमत्सरइन्द्रियोरसः॥ १‡ ॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

---

* 'नियवसौमिकमिदानीं षष्ठमह्नः'—इति वि०।

† 'वयस्त्विमहे वनाष्ठम्'—इति वि०।

‡ ऋ० वे० ७, ३, १९, ५।

तत्र ... शोध्यत इत्यर्थः। रसो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)] ;"अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्यो-र्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

३ १२ २ १२ ३क २र ३
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ १ ३ १ २ ३ १
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ २ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ ३ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

---

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिरूपं दीप्तिकरं यज्ञस्य पवते पूयते मधु-रसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य स्वभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, २, १४, १।

सोमः "वाजी" वेजनवान् गमनवान् [ यद्वा, अश्वसदृशः ] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति । कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [ दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः ] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* 'हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्द्धितकरस्य यज्ञस्य "सदनेषु" "सीदति" निषण्णो भवति† । कीदृशः सन् ? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ २ १ ३
अग्रेसिन्धूनाम्पवमानोअर्ष
१ २ ३ १ २ ३ १र २र
स्यग्रेवाचोअग्रियोगोषुगच्छसि ।
२ ३ १ २ ३ १र २र
अग्रे वाजस्यभजसेमहद्धनꣳ
३ २ ३ १ २
स्वायुधःसोतृभिःसोमसूयसे ॥ ३¶ ॥ १

* 'विश्वस्य द्रष्टा'—इति वि० ।

† 'मित्र आदित्यविशेषः । अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थ-लक्षणेन सम्बन्धेन तस्य हर्म्येषु द्रोणकलशप्रभृतिषु सीदति'—इति वि० ।

‡ 'अविभिः—[illegible]षीयावऊवचन मिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । अवेः स्वभूतेन दशापवित्रे ण सिन्धुभिः उदकैरिश्वैः'—इति वि० ।

¶ ऋ० वे० ७, १, १४, २ ।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावानामुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्योदकं जनयितुमाहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" अन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन-प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्वादिभिः "सूयसे"† अभिषूयसे॥ २॥ १

॥ मरुतान्धेनु॥ ज्यो२३४। तिर्यज्ञस्यपवतेमधो। द्योप्रायाम। पितादेवानाञ्जनिता। विभूवासू२ः। दधातिरत्न२स्वधयोः। अगोचायार२३म्। मादिन्ता२३४माः। मत्सरइद्रीयो३रा५साइ५६ः॥(१) आ२३४। भिक्रन्दन्कलशंवाजियो। द्योषाताथि। पतिर्दिवःशत धारो। विचक्षाणा२ः। हरिर्मित्रस्यसदनाथि। षुसी दाता२३यि। मामृजा२३४नाः। अविभिः सि। धूभा

---

*, † "भजते"—इति "पूयते"—इति च क०-पाठः।

३यिर्वा५र्षा६५६ ॥(२) आ २ ३ ४ । ग्ने सिन्धूनाम्पवमान

ओ । शोर्षासायि । अग्रे वाचोअग्रियोगो । षुगच्छा

सा २यि । अग्रेवाजस्यभजसायि । महद्धाना २ ३ म् ।

सूवायू २ ३ ४ धाः । सोतृभिःसो । मासू ३ या ५ सा६

५ ६ यि(३) ॥]११* ॥ [१]

॥ वरुणसाम ॥ ज्योतिर्य्यं । आ ३ स्यपवतोमधुप्रि

याम् । पितादेवानाञ्जनिताविभूवमूर३वोयि । दधा

तिरत्नंस्वधयोः । अपीचियार३म् । वोयि । मदायि

न्तार३माः । मात्सरः । इन्द्रि । यो २ ३ । रसाउवा

३ ॥(१) अभिक्र । दा३न्कलशंवा । जियर्षतायि । प

तिर्द्दिवःशतधारोविचक्षणा २ ३ वोयि । हरिम्मित्रस्यसद

ने । षुसीदता२३यि । वोयि । मर्म्मृजा२३नाः । आ

* ऊ० गा० ८प्र० १अ० ११सा० ।

विभिः। सिन्धु। भा२३यिः। वृषाउवा३॥(२) अग्ने
सि। धू३नाम्यवमानः। अर्षसायि। अग्रेवाचोअग्नि
योगोषुगच्छसा२३यिहोयि। अग्रेवाजस्यभजसे। मह
द्धना२३म्। होयि। सुवायू२३धाः। सोतृभिः। सो
म। सू२३। यसाउवा३। ए३। इन्दुःसमुद्रमुर्विया
विभाती२३४५(३) ॥ २* ॥ [२] १

अथ द्वितीय-तृचे—

प्रथमा।

असृक्षतप्रवाजिनोगव्यासोमासोअश्वया।
शुक्रासोवीरयाशवः ॥ १* ॥

"वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ऊ० गा० १३प्र० १ख० २उा० ।

† ऋ० आ० ५, १, ५, ६ (१भा० ७६३पृ०)=ऋ० वे० ७, १[illegible], ५।

‡ "गव्या"—इति ऋ०-पाठः।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषामिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया ।

३ १ २   ३१ २२ १ २ ३ १ २
शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।
१ २२ १ २२ १ २
पवन्ते वारे अव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे । कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया ।

१र २र २ २ ३२ ३१ २ ३ २ ३१ २
ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा ।
१ २ ३ १र २र
पवन्तामान्तरिक्ष्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

---

* ऋ० वे० ७, १, २६, ५ ।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां । 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या ।

‡ ऋ० वे० ७, १, २७, १ ।

पवन्तां सर्वतः चरन्तु। वस्वित्युक्तं कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि, अन्तरिक्षे भवानि* एवमुक्त-प्रकारेण विश्वानीत्यर्थः॥ ३॥ २

पवस्वेति-दशर्चे तृतीय-सूक्ते—

प्रथमा।

१ २ ३ १ र २ र ३ १ २ ३ १ २

पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।

१ १ ३ १ र १ र

इन्द्रमिन्दोवृषाविश॥ १†॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिक्षर किञ्च हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ २.३ १ २ - ३ १

आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।

१र २र ३ २

आयोनिन्धर्णसिस्सदः॥ २¶॥

---

* 'धनानीत्यनुषज्यते'—इति वि०।

† ऋ० आ० ६, १, २, ४ (२भा ४० ऋ०) वे० ६, ७, १८, १।

‡ 'देवानां भक्तिभूतः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, २।

हे "इन्दो" सोम ! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्न-वत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "महो" महत् "पयः" पानीयम् "अन्धः" अन्नम् "आवच्छस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २ ३१उ ३ १ २ ३ १ २ ३ १ २
अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।
३ १ २ ३ १ २
अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३ १ २ ३ १र २र ३ १ २
महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।
१र २र ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम ! त्वं "यद्" यदा यज्ञे "गोभिः" गोर्विकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "महान्तं" गुणैः

* 'योनिं द्रोणकलशम्'—इति वि० ।

† ऋ० वे० ६, ७, १८, ३ ।

‡ ऋ० वे० ६, ७, १८, ४ ।

प्रवृत्त "त्वा अनु" त्वामनुप्रति "सिन्धवः" स्यन्दमानाः "मही:" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

१　२　३　१　२　　　१　२　३　१　२　३　१
समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः।

१　२　३　१　२　　३　१
सोमः पवित्रे अस्मयुः ॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्माद्रसाइति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१　२　　३　२　३　१　२　३　२　　३　१२　१२३२
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः।

१२　　१२
सꣳ सूर्येण दिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योततइत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* छ० आ० ६, १, २, १ ( २ भा० ५५ पृ० )=ऋ० वे० ६, ७, १८, ५।

† 'अस्मासु भक्तिमिच्छुः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

अथ सप्तमी।

२ ३१२ ३१२ ३१२
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
१ २१२३१२
याभिर्मदायशुम्भसे॥ ७* ॥

हे "इन्द्र!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७ ॥

अथ अष्टमी।

१२ १ २३१२ ३१२
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२३१२ ३२
तवप्रशस्तयेमहे॥ ८‡ ॥

"लोककृत्नु" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते—"तव" "महे" महते "प्रशस्तये" प्रशंसनाय॥ ८ ॥

---

* ऋ० वे० ६, ७, १९, २।

† 'शुम्भसे शोध्यसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

¶ 'घृष्वये—धर्षनार्थम्'—इति वि०।

अथ नवमी ।

३ १ २ ३ १ २ १ १ २ १ २ ३ १
गोषाइन्दोनृषाअस्यश्वसावाजसाउत ।
२ २ ३ १ २ ३ १
आत्मायज्ञस्यपूर्व्यः ॥ ९* ॥

हे "इन्दो" क्रियमाण-सोम ! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [ सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् ]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपिच "वाजसा" अन्नानां दाता चासि ॥ ९ ॥

अथ दशमी ।

३ १ २ ३ १र २र ३ १ २
अस्मभ्यमिन्दविन्द्रियम्मधोःपवस्वधारया ।
३ १ २ ३ १ २
पर्ज्जन्योवृष्टिमाऽइव ॥ १०† ॥ ३

हे "इन्दो" सोम ! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमांइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" क्षर ॥ १० ॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥ ३

---

* ऋ० वे० ६, ७, १९, ५ ।

† ऋ० वे० ६, ७, १९, ४ ।

अथ द्वितीय-खण्डे —

सनाचेति-दशर्चे प्रथमे सूक्ते, प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
सनाचसोमजेषिचपवमानमहिश्रवः।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १* ॥

हे "महिश्रवः" महद्‌न्न! "पवमान" सोम! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय। "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ २३ १ १ २ ३ १ २
सनाज्योतिःसनास्वा२३ऽर्विश्वाचसोमसौभगा।
१ २ ३ २ १
अथानोवस्यसस्कृधि ॥ २¶ ॥

हे सोम! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ। अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि। "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत् ॥ २ ॥

---

* ऋ० वे० ६, ७, २२, १।

† 'सना-शब्दः सदावाची। सदा जेषि च शत्रून्'—इत वि०। सायणमते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः। विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)"—इति दीर्घः। मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले त्वयथायथं ह्रस्वान्त-प्रतीकमेव गृह्यते; इयमेव शैलिरस्य व्याख्यातुः सर्वत्रेति बोध्यम्।

‡ 'वस्यसः—वसनीयः'—इति वि०।

¶ ऋ० वे० ६, ७, २२, २।

अथ तृतीया।

१ २ १ २३ १उ २ ११ ३११
सनादक्षमुतक्रतुमपसोमम्धोजहि।
१ २ ३ १ १
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रूंश्च "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१ ३ १ १ ३१ २
पवीतारःपुनीतनसोममिन्द्रायपातवे।
१ २ ३ १ १
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, १९, ३।

‡ ऋ० वे० ६, ७, २२, ४।

अथ पञ्चमी ।

१२ १२३१ २ ३१ २३२ ३२ १ २
त्वꣳसूर्येनआभजतवक्रत्वातवोतिभिः ।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ५* ॥

हे सोम ! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्त्तृकाभीरक्षाभिश्च "नः" अस्मान् "सूर्ये" "आ भज" प्रापय । सिद्धमन्यत् ॥ ५ ॥

अथ षष्ठी ।

१२३२ २ ३१ २ ३ १ २
तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्य्यम् ।
१२ ३ १
अथानोवस्यसस्कृधि ॥ ६† ॥

हे सोम ! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः । सिद्धमन्यत् ॥ ६ ॥

अथ सप्तमी ।

३क २र ३ १ २ ३१ २ ३ २
अभ्यर्षस्वायुधसोमद्विवर्हसꣳरयिम् ।
१ २ ३ १ २
अथानोवस्यसस्कृधिः ॥ ७ ॥

हे "स्वायुध" शोभनायुध सोम ! त्वं "द्विवर्हसं" द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन् अभिगमय । सिद्धमन्यत् ॥ ७ ॥

* ऋ० वे० ६, ७, २२, ५ ।
† ऋ० वे० ६, ७, २३, १ ।
‡ ऋ० वे० ६, ७, २३, २ ।

अथाष्टमी।

२ २ १२ ३१२ ३१२ ३२
अभ्या ऽ३ऽर्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१२ ३ १२
अथानोवस्यसस्कृधि ॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत् ॥ ८ ॥

अथ नवमी।

२ ३१२ ३१२ ३१२
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१२ ३ १२
अथानोवस्यसस्कृधि ॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविधफलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत् ॥ ९ ॥

अथ दशमी।

३१२ ३२३ १२३१ २ ३१२ ३१२
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१२ ३ १२
अथानोवस्यसस्कृधि ॥ १०¶ ॥ ४

* ऋ० वे० ६, ७, २३, १।

† 'सासहिःसाधनस्वभावः'—इति वि०।

‡ ऋ० वे० ६. ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

हे "इन्दो!" यागेषु क्रियमाण सोम! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तञ्च "विश्वायु" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर। गतमन्यत्॥ १०॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा†।

१ २ २ ३ १ २   ३ १ २ ३१२ ३२
तरत्समन्दीधावतिधारासुतस्यान्धसः।

३ २ २ ३ १ २
तरत्समन्दीधावति॥ १‡॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति। तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति। पुनरपि तदेवात्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मन्दीयं स्तौति धावति गच्छत्यूर्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचास्तुतस्य (निरु०१३,६)"—इति॥ २॥

---

* 'विश्वायुं—दीर्घायुष्यं च आभर'—इति वि०।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, अप्रयोजनं तथाप्यत्र ऋक्षेपेणोच्यते'—इति वि०।

‡ ऋ० आ० ६, १, २, ४ (२भा० ५८४०)=ऋ० वे० ७, १, १५, १।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति सोमस्य। सोमस्य धारा वक्तव्या सुतस्याभिषुतस्य अन्धसीऽन्नस्य सोम-लक्षणस्य'—इति वि०।



5973

अथ द्वितीया।

२१ १२१२३१ १ २१२
उस्रावेदवसूनाम्मर्त्तस्यदेव्यवसः।
२३२ ३१ २
तरत्समन्दीधावति॥ २*॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत्॥ २॥

अथ तृतीया।

३१२ ३१२ २३१२
ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे।
२३२ ३१ २
तरत्समन्दीधावति॥ ३‡॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरचेतरयोग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावत्सार एतयोर्धनानि

* ऋ० वे० ७, १, १५, १।

† 'उस्रा दीप्ता वेद वसूनां, विद लाभे, विद्लृ लाभे, विद सत्तायाम्, सर्वत्रा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, १।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान स्वभावयोः सोम-धारयोरपि दीपकत्वेन सह सम्भवयोः पापध्वंसकारयोः'—इति वि०।

प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः। तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदश्वी ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्वाजुह्वा सातं प्रतिमृशाते तावकामयेतामसातमाविविद सातंस्वादात्त मिवैव न प्रतिगृह्णीत मिति भावे तच्चतुर्ऋचमपश्यतास्तेरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृह्णीतं स यः प्रतिगृह्य कामयेत"—इत्यादि॥ ३॥

अथ चतुर्थी।

१र २र ३ ३ १ ३ १ ३ १ २ ३ १ २
आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे।
३ १ २ ३ १ २
तरत्समन्दी धावति॥ ४*॥ ५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च, "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृहीतं तत् सर्वम् अप्रतिगृहीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत्॥४॥ ५

एतेसोमाइति त्र्यृचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३१र १र ३ २र २र ३ २
एते सोमा अभ्यसृक्षतगृणानाः श्रवसे मह।
३ १ २ ३ १ २
मदिन्तमस्य धारया॥ १†॥

---

* ऋ० वे० ७, १, १४, ४।

† ऋ० वे० ७, १, १८, १।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सन्तः "सुवानाः" सूयमानाः "महे" महते "श्रवसे" अस्माकं बलाय धारया "प्रक्षरन्त" गच्छन्ति ॥१॥

अथ द्वितीया।

२ ३१ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि।
३ १ २ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम! "वीतये" देवानां भक्षणाय "नृम्णा" नृम्णानि धनवत् प्रियतराणि† "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशा-पवित्रादधः क्षर ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः।
३ १ २ ३ १ २
गृणानोजमदग्निना ॥ ३¶ ॥ ६

---

* ऋ० वे० ७, १, १८, २।

† 'नृम्णा बलेन'—इति वि०।

‡ 'सनत् सदा'—इति वि०।

¶ ऋ० वे० ७, १, १८, ४।

"उत" अपिच हे सोम! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "स्तुवानः" स्तूयमानः त्वं "नः" अस्माकं गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* वीर्याणि "इषः" अन्नानि देहीत्यर्थः॥ १॥ §

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-तृचे,¶ प्रथमा।

१ २उ ३ १ २ ३ १ २ २
इमᳲस्तोममर्हतेजातवेदसे

१ २ ३ १ २ ३ १ २
रथमिवसम्महेमामनीषया।

२ ३उ ३ १ २ २ ३ १र
भद्राहिनःप्रमतिरस्यसᳲस

२र ३ १र २र ३१र २र
द्यग्नेसख्येमारिषामावयन्तव॥ १§॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, [ज]ात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निश्चितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि०।

† 'उग्रं वर्षिष्ठवमानम्'—इति वि०।

‡ 'सर्वस्मिं सप्तोमः सप्तमः'—इति वि०।

¶ 'आग्नेयमाज्यम्'—इति वि०।

§ ऋ० आ० १, ९, २, ४ (१मा २०१४०'=ऋ० वे० १, ६, १०, १।

बुद्या "इमम्" एतत्स्वरूपं स्तोमं रथमिव यथा तक्षा रथं संस्करोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः । तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्या स्तुम इत्यर्थः । हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः । [ "अर्हते"—अर्ह पूजायाम् ( भ्वा० प० ) "अर्हः प्रशंसायामिति ( ३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् ( ३,१,४), शतुश्चादुपदेशात्सार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् ( भ्वा० प० )। रिषाम—रिष हिंसायां (भ्वा०प० ) व्यत्ययेन शः(३,१, ८५) । तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीᳬंषिते

२ १ २ ३ १ २ ३ २
चितयन्तःपर्वणापर्वणावयम् ।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराᳬंसाधयाधियो

१र ३ १र १र ३ १र १र
ग्नेसख्येमारिषामावयन्तव ॥ २* ॥

हे "अग्ने !" त्वदर्थम् "इध्मम्" इन्धन-साधनम् एकविंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, ३०, ४ ।

तदनु "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपक्ष-माहृताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १ १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययाद्घाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २३ १२
प्रकेमत्वासमिधꣳसाधयाधिय

२ ३१२ ३ १ २ ३ १ २
स्त्वे देवाहविरदन्त्याहुतम्।

१ २ ३ १२ ३१२ ३२ ३१२
त्वमादित्याꣳआवहतान्ह्यु३श्म

३१२ १२ ३२ ३१२ ३२
स्यग्नेसख्येमारिषामावयन्तव॥ ३†॥ ७

---

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयात् समर्थः'—इति वि०।

† ऋ० वे० १, ६, १०, ३।

हे अग्ने! "त्वा" त्वां "सनिधं" सम्यगिद्धं कर्तुं "अशेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [अशेम—अशू व्याप्तौ (भ्वा० प०), "लिङ्याशिष्यङ् (३,१,८६), अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७, १, ४६,), अदादित्वाच्छपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६)॥ २॥ ७

॥ समन्तम्॥ इमꣳस्तोममर्हतेजातवेदसायि। रथ मिवसम्महेमामनीषया। भद्राहारꣳयिनाः। प्रामतिर स्यसꣳस। द्यग्नायि॥(१) भरामेध्मङ्कृणवामाहवीꣳषिता

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२, १)।

यि । चितयन्तःपर्वणापर्वणावयाम् । जीवाताउ२३वायि । प्रातराꣳसाधयाधि । योग्नायि ॥(२) अर्केमत्वासमिधꣳ साधयाधियाः । त्वेदेवाहविरदन्त्याऽहुताम् । तुवमा२३ दो । त्याꣳआवहतान्ह्युश्म । स्यग्नायिसाख्या । औ हो३४वाहायि । मा । रायिषा२३मा३ । होवा३हायि । वयन्ता२३वा३४३ । ओ२३४५ई । डा(३) ॥ १५ * ॥ ७

अथ द्वितीय-तृचे—

प्रथमा ।

प्रतिवाꣳसूरउदितेमित्रङ्गृणीषेवरुणम् ।
अर्यमणꣳरिशादसम् ॥ १ † ॥

हे मित्रावरुणौ ! "मित्र" त्वां "वरुणं" च "वां" युवां "रिशा-दसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

* ऊ० गा० १७ प्र० १ खा० १५ सा० ।

† ऋ० वे० ५, ५, ६, १ ।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्यें देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
राया हिरण्यया मतिरियमवृकाय शवसे।
३ १ १ २ र ३ १ २
इयं विप्रा मेधसातये ॥ २ * ॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्राय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः ॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्रज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
ते स्याम देव वरुण ते मित्र सूरिभिः सह।
२ १क २र
इष ँ् स्वश्च धीमहि ॥ ३ ‡ ॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

---

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वश्च" स्वर्गञ्च "धीमहि" धारयामहे* ॥ २ ॥ ८

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

२ ३उ ३ २ ३ २ ३ २ ३१ २ ३१ २र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ १† ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३१र २र ३ १ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ २‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरेः" बहु "यस्य" यत् धनम् [ सर्वत्र कर्म्मणि षष्ठी वेदि-

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† छ० आ० २, १, ४, १० ( १भा० ३११ पृ० )=ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १र २र ३ १ २
यद्वीड़ाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम्।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र !" त्वया च "वीड़ौ" दृढ़े परैः कम्पयितुमशक्ये "यत्"धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

३ १ २ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्म्मसु।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

---

* "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति, स्पृक्ष्मि बहिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४।

† छ० आ० ३, १, २, ४ ( १भा० ४४० पृ० )=ऋ० वे० ८, ३, ४९, ६।

‡ ऋ० वे० ६, ३, १०, १।

हे "इन्द्राग्नी!" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च "सस्नी" संस्नातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम्॥ १॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २र
तोशासारथयावानावृत्रहणापराजिता।
१ २ ३ १ १
इन्द्राग्नीतस्यबोधतम्॥ २ ‡॥

हे "इन्द्राग्नी!" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्"॥ २॥

अथ तृतीया।

२ १ २ ३ १र २र ३ १ २ ३ १ २
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम्॥ ३ §॥ १०

* 'सस्नी—शोधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा—दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, २०, ३।

हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिरं" मदकरं "मधु" सोमात्मकम् अमृतम् "अक्षन्" अपूरयन्। सिद्धमन्यत्॥ ३॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य तृतीयः खण्डः*॥ ३॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थे खण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा।

१ २　　३ १ २ ३ १ २ ३　२

इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।

३ २ ३ १　२ ३ १ २

अर्कस्ययोनिमासदम्॥ १ ¶॥

हे "इन्दो" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" क्षर॥ १॥

अथ द्वितीया।

२ २　१ २　३　२ ३ १ २　　३ २

तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम्।

१ २　　३　१ २

सन्त्वामृजन्त्यायवः॥ २ §॥

---

* 'उक्तं प्रातःसवनम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि०।

‡ 'इषोदधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि०।

¶ छ० आ० ५, २, ४, ६ ( २भा० १९ पृ० )=ऋ० वे० ७, १, ४०, १।

§ ऋ० वे० ७, १; ४०, २।

हे सोम! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति†। अपि च "त्वा" त्वाम" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ र ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे।
१ २ ३ १ २
पवमानस्यमरुतः॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम! "पवमानस्य" चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र १
॥ इषोवृधीयम्॥ इन्द्रायेन्दाउ। मरुत्वतायि।
२ १ १ २ १ १ र
पवस्वामा२। धुमत्तमाः। अर्कस्यायो२। निमा।
१ ३ ५र र २ र र १
स्यार२दा२३४औहोवा ॥(१) तन्त्वाविप्राः। वचोविदाः।

---

* विप्रा, वचोविदः—मेधाविनः, ऋत्विजः'—इति वि०।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि०।

‡ 'आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् (२, ३)।

¶ ऋ० वे० ७, १, ४०, ४।

§ 'रस' वीर्यम्'—इति वि०।

परिष्काण्वा२। निधर्णसायिम्। सन्त्वामाज्ज्ञाँ२। ति
आ। या२वा२३४औहोवा॥(२) रसन्तेमायि। वो
अर्य्यमा। पिबन्तूवा२। रुणःकवायि। पवमाना२।
स्यम। क्रु२ता२३४औहोवा। द्रुषोवृधे१(३)॥ १८ *॥ [१]

॥ गायत्रीकौञ्चम्॥ इन्द्रायेन्दा१औहो। मा ३ रु
त्वा२३४तायि। पावस्वामा। धू३म। ता २ ३ ४माः।
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२
३यिम। अ। वाहायि। सा२३४दाम्। एहियाइ
हा॥(१) तन्त्वाविप्रा१ औहो। वा३। चो। वी२३४दाः।
परिष्काण्वा। ता३यिधा। णा२३४सायिम्। परिष्क
ण्वन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।
अ। वाहायि। या२३४वाः। एहियाइहा॥(२) रस

* क० गा० ३ प्र० १ अ० १९ सा०।

र १ ऽ २ ३ ५ १ २ १ २ ऽ २
न्तेमा१औहो । ओ३अर्या२३४मा । पायिवन्तुवा । रू३णः ।
२ ५ १ ४ ३ ५ १
का२३४वायि । पिवन्तुवरुणा३२ः । का२३४वायि । पव
र ४ ५ १ ६र
मानस्या२३ । म । वाहायि । रू२३४ताः । एहियाह
५ ४
हा । होपुई । डा(३) ॥ २० * ॥ [२]

२ र ३ १ २
॥ वाजदावदावयम् ॥ इन्द्रायेन्दाउ । मरू२त्वा२३
५ १ ३ ५ २ १ १ २
४तायि । पवा२स्वा२३४मा । धुमत्ता२मा: । आ२३र्का ।
१ २ १ ५ ४ ५ १ र
स्या२यो । निमो२३४वा । सा५दो६हायि ॥(१) तन्त्वा
१ ३ ५ १ २ ५
विप्राः । वचो२वी२३४दाः । परा२यिष्का २ ३ ४ एवा ।
२ १ १ २ १ २ १
तिधर्णा२सायिम् । सा२३न्त्वा । मा२र्जा । तियो२३४
५ ४ ५ २ र १र ३
वां । या५वो६हायि ॥(२) रसन्तेमायि । ओआ२र्या
५ १ ३ ५ २ १ १ २
२३४मा । पिबा२न्तू२३४वा । रुणःका२वायि । पा२३वा ।
१ २ १ ५ ४ ५
मा२ना । स्यमो२३४वा । रू५तो६हायि(३) ॥ २१ † ॥[३]

* ऊ० गा० ३प्र० १ख० १०सा० ।

† ऊ० गा० ३प्र० १ख० २१सा० ।

२ ३र ४ ५ र र
॥ आश्वसूक्तम् ॥ आ३औहोवाहायि । इन्द्रायेन्दा
२ १ र २र र ३र २ २ १ ३
उ । मरु । त्वते । ऐहीयेहौ१ । पावस्वमधुमात्तमः ।
र र १र २ १ १र
ऐहीयेहौ१ । आ२यि । आर्क्का२स्यायो२ । निमा ।
३ ५र र २ ३र ४ ५ र
सा२दा२३४औहोवा ॥(१) आ३औहोवाहायि । तन्त्वा
२ १ २र र ३र २ २
विप्राः । वचो । विदः । ऐहीयैहौ१ । परिष्कृण्वन्ति
१ २र र २ र १ १
धार्णसिम् । ऐहीयैहौ१ । आ२यि । सान्त्वा२मार्जा
१र ३ ५र र २ ३र ४
२ । तिआ । या२वा२३४औहोवा ॥(२) आ३औहोवा
५ र २ र १ र २र र ३र २
हायि । रसन्तेमायि । त्रोआ । यमा । ऐहीयहौ१ ।
१ २ १ र २र र ३र २ १
पायिवन्तुवरुणाःकवे । ऐहीयैहौ१ । आ२यि । पावा
१ १ ३ ५र र २ १ र २
२माना२ । स्यम । रु२ता२३४औहोवा । प्राक्रआऊ
१ १ १ १ १
ता२३४५ः(३) ॥ ४ * ॥ [४]

१ ५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ इन्द्रायाश्यिन्दोमरुत्वतायि । पवा

---

* ऊ० गा० ८प्र० १अ० ४सा० ।

२ १ १ १ २ १
स्वा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमार२३स

२ २र२१११
दाउ। वा३। स्तोषे३४५(१) ॥ ४ * ॥ [५]

२ १ र र १
॥ दार्ढच्युतम् ॥ इन्द्रा। इहा। येन्दोमह२त्वता

२ १ १
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ

२ १ र १ २
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१ ॥(१)

२ १ र १ २ १
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।

१ २ १
इहा। कण्वन्तिधा२र्णसायिम्। इहा। सन्त्वा। इ

१ १ २ १
हा। मृजन्त्या२यवाः। इहा१ ॥(२) रसाम्। इ

र र १ २ १
हा। तेमित्रोआ२र्यमा। इहा। पिबा। इहा। तु

१ २ १ र
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा

१ २
२रुताः। इहा१(३) ॥ १२ † ॥ [६]

---

* ऊ० गा० १०प्र० २ख० ४सा०।

† ऊ० गा० १६प्र० १ख० १३सा०।

२ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि । मा

२ ५ २ १ ५ २ १ २
रुत्वा२३४तायि । पवास्वा२३४हायि । मधुमत्ता ३ ४ ।

३र ४र ५ १ २ ५ २ १ ५ १ १ २
आहोवा । इहा२३४हायि । उऊवा२३४मा: । अकस्य ।

१ ७र २ ३र ४र ५ १ २ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो

५र ५ २ र र र १
३१२३४ । दाम् । एहियाईहा ॥(१) तन्त्वाविप्राऔहो

२ २ ५ २ १ ५ १
हायि । वाचोवी२३४दा: । परायिष्का२३४हा । एवन्ति

२ ३र ४र ५ १ २ ५ २ २ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उऊवा२३४सोम् ।

२ १ २ १ ७ र २ ३र ४र ५ १ २
सन्त्वामृ । जान्तिआया३४ । औहोवा । इहा २ ३ ४

५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वा: । एहियाईहा ॥(२) रस

र र र १ २ २ ५ २१
न्तेमा । औहोहायि । वोअर्या२३४मा । पिबात्२३

५ १ २ ३र ४र ५ १ २ ५
४हायि । वरुण:का३४ । औहोवा । इहा२३४हायि ।

२ २ ५ २ १ १ र १ ७ २ ३र ४र ५
उऊवा२३४वायि । पवमा । नास्यमरु ३४ । औहोवा ।

१ २ ५ ३र २ ५र ५
इहा२३४हायि । औहो३१२३४ । नाः । एहियाइद्धा ।
४
हौंपृइ । डा(३) ॥ १६ * ॥ [७]

१ २र १ र २ र १ २ १
॥ इहवद्वामदेव्यम् ॥ तन्त्वा विप्रावचोविदः । इद्धा ।
१ २ १ र
परिष्कृण्वन्तिधर्णसा२यिम् । इद्धा । सन्त्वामृजन्ता२
१ २ १ ५ ५
यि । इद्धा३ । या२३४वो६हायि(२) ॥ १८ † ॥ [८]

२ र १ २ १ ३र
॥ मार्गीयवाद्यम् ॥ रसौहोवा । तेमा२यि । त्रो
२ ३ ५ १ २ १ २ १ र
अर्य्या२३४मा । पिबन्तुव । रुणाःका१वा२यि । पव ।
२ २ २ ५ १ ३ ५र र २
औ३होयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।
६ १ १ १ १
ऋता२३४५ः(३) ॥ २० ‡ ॥ [९] ११

---

* ज० गा० २२प्र० २ख० १६सा० ।

† ज० गा० २२प्र० १ख० १९सा० ।

‡ ज० गा० २२प्र० १ख० २०सा० ।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा।

३ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रेवाचमिन्वसि।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान" पूयमान सोम! "पिशङ्ग" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतृणामभि चरसि प्रयच्छसि॥१॥

अथ द्वितीया।

२ ३उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्ययेवृषोअचिक्रदद्वने।
३ १ २ ३ १र २र २ १
देवानाꣳसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि॥२‡॥१२

* 'बृहती, औष्णीरन्ध्र-प्रभृतीनि ब्राह्मणोक्तानि'—इति वि०।

† ऋ० आ० ६, १, ४, ७ (२भा० ३९१पृ०)=ऋ० वे० ७, ५, १६, १।

‡ ऋ० वे० ७, ५, १६, २।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले, पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम! पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अञ्जमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि ॥ २ ॥ १२

॥ औक्ष्णोरन्ध्रम् ॥ मृज्यमानाः । सुहस्तियाइ । सा मूइद्रायिवा । चमिन्वसाइयि । रायोइम्पायिशा । गम्ब ऊलाइम् । पूरुइस्पृ२३४हाम् । पवमा । ना । औइ हो । भियो२३४वा । षा५सो६हायि ॥ (१) पवमाना । भियर्षसाइयि । पावाइमाना । भियर्षसाइयि । पूनाइ

* 'वृषा उ इति पदपूरणः'—इति वि० सम्मतस्यैव छेदः पदकारस्य तथाहि—
"वृषा । उ"—इति ।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मध्येभूते'—इति ।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि० ।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि० ।

§ 'निष्कृतं स्थानम'—इति वि० ।

४ ५ १र १र २ ५ १ र १
नोवा । रेपवमा३ । नोआ२व्या२३४यायि । वृषोअ ।

१ २ २ ५ ४ ५
चा । औ३हो । क्रदो२३४वा । वा५नो६हायि ॥(२)

१र १ २ ४ ५ १
वृषोअचायि । क्रदद्दना३यि । वार्षो३आचायि । क्रद

१ २ ४ ५ २ १
द्दना३यि । दायिवा३ना५सो । मपवमा३ । नना२यि

३ ५ १र २ १ २ २ १
ष्का२३४र्त्ताम् । गोभिर । जा । औ३हो । नओर३

५ ४ ५
४वा । षा५सो६हायि(३) ॥ १ * ॥ [१]

२ १ र र र र
॥ स्वारैडमौक्षणोरन्ध्रम् ॥ मृज्यमानःसुहस्त्या । समु

१ २ १ २ १ ७ २ २ २
द्रे वोवा । चामिन्वसि । रायिम्पिशा ३ । हा ३ हा ।

१ २र २ १ २ १ २ २ २ १
गम्बहुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा

१ २र र १ २ र १ २ १ २
२३३यि ॥(१) पवमानाभियर्षसि । पवमानोवा । भाय

१र र २ २ २र र २र र १ ३र
र्षसि । पूनानोवा ३ । हा ३ हा । रेपवमानोअव्यये ।

१र २ २ २ १ ३
वार्षोअचा३यि । हा३हायि । क्रदद्दा२३ना३४३यि ॥(२)

---

* ऊ० गा० २प्र० १अ० १सा० ।

१ र २ १ र २र १ २ १ २र १
वृषोअचिक्रदद्वने। वृषोअचोवा। क्रादद्वने। दायि
र र २ २ २ १ २र १ र
वानाᳲसो३। द्वा३द्वा। मपवमाननिष्कृतम्। गोभा
२ २ २ र ५ २ २
यिरञ्जा३। द्वा३द्वा। नोअर्षा२३सा३४३यि। ओ२३
४५ई। डा(३)॥२*॥[२]

२ १ र २ १ १
॥वाजजित्†॥ मृज्यमानःसुहा। स्तिया२। समू
१ र १ २र१ १
२हो। द्रेवा२द्दो। चामिन्वसायि। रया२यिᳲहो
१ २ १ २र१
यि। पिशा२हो। गम्बकुलाम्। पूरुस्पृहाम्। पवा
१ र १ २र१ २ १ २र
२हो। माना२हो। भीयर्षसा३१उवा२३॥(१) पवमा
र १ १ १ र २र
नामिया। षसा२यि। पवा२द्दो। माना२हो। भी
१ १ र १ २र१ २र
यर्षसायि। पुना२द्दो। नोवा२द्दो। २पवमा। नो
१ १ १ २र१
अव्ययायि। वृषो२द्दोयि। अचा२यिद्दोयि। क्राद
२ १र२ १
द्वना३१उवा२३॥(२) वृषोअचिक्रदात्। वना२यि।

* ऊ० गा० ३प्र० १ख० २सा०।

† "वार्चद्राजजिदोद्दणोरश्मम्"—इति ख० पु० पाठः।

१ १ १ १२ १ १ २
वृषो२होयि। अचा२यिहोयि। क्रादद्दनायि। देवा

१ २ १ ११ १२ १ २
२हो। नाऽसो२हो। मपवमा। नानिष्कृताम्। गो

१ १ १२ १ २
भा२यिर्हौयि। अज्ञा२हो। नोअर्षसा३१उवार३।

१२ १२ २ २
वाजीजिगी३वाऽ१(३) ॥ ३ * ॥ [३]

१ २ १ १ १ १ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा

२ २ २ १ २ १ २ १
मुद्रे वा। चमायिन्वा१सो२। रा२३यीम्। पा२३यि

१ १ २ १ २ १ ५ २ १
ग्रा। गम्वहुलम्। पुरु२३हायि। स्पृहा३मा। पव

२२ १ २ १ २ १ २ २ ५ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३हो२३

५ ४ ५ १ २ २ १ २
४। वा। षापूसो६हायि ॥(१) पवमानाभियर्षसोवा।

१ २ १ २२ २ १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।

१ २ १२ २ २ १२ २ १ ४ २
नो२३वा। रेपवमा। नोआर२३हायि। व्यया३आ।

१२ १ ११२ १ २ १ २ ५ २
वृषोअचिक्रददने। वार३र्षो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

५ ४ ५ २र १ १
४। वा। वा५नोई्हायि ॥(२) वृषोअचिक्रदद्वनोवा।

१ १ १र २ १ २ १ २
ओवा। वार्षोअचि। क्रदाद्वा१ना२यि। दा२३यिवा।

१ २ १ २र १ २ १ ऽ २
ना२३९सो। मपवमा। नजा२३हायि। क्तना३मा।

र २ र १र २ १ २ १ र २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानओ३।

२ १ ५ ४ ५
वो३हो२३४। वा। षा५सोई्हायि(३) ॥ ४ * ॥ [४]

२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा

२ १र २ १ १ १ १ २ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रेवाचमिन्व

१ ३ १ १ १ १ २ १ २ १ २ १ २ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ

२ १ २ १ १ १ १ १ २र र १ २ १
हम्। इहा। उपा २ ३ ४ ५। पवमानाभियर्षसि। इ

३ १ १ १ १ १ २र र १ २ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ

३ १ १ १ १ १ २र २ १ २ १ ३ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।

१र १र र र १र र १ १र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १अ० ४सा०।

२ १२र १ ३ १११११ १र २ १
अचिक्रदद्वने। इडा। उपा२३४५॥(२) वृषोअचिक्रद

२र १ ३ ११११ १र २ १२र १
द्वने। इडा। उपा२३४५। वृषोअचिक्रदद्वने। इडा।

३ ११११ २र१र र २र र १
उपा२३४५। देवाजा(ऽ)सोमपवमाननिष्कृतम्। इडा।

३ ११११ २उ ऽ ऽ १र १र २र २
उपा२३४५। हाउहाउहाउवा। गोभिरञ्जानोअर्षसि।

१ ३ ११११
इडा। उपा२३४५(३)॥ ५ * ॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम्॥ मृज्यमानःसुहस्तिया। समुद्रेवाऽच

१ २ १ २ २ १
मिन्वसायि। रयिम्पा२३यिशा। गाम्बङ्कुलम्। पुरुस्पृ

२ ३ ३ १ ३र २ १ २ १
हाम। औहो३४वाहायि। प। वामार२३ना ३। हो

२ २ १ २ ११२रर १ २१
वा३हा। भियर्षा२३सा३४३यि॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ ३र
यि। पुनानो२३वा। रेपवमा। नोआव्यायो। औ

१ ४ ३र २ १ २ १ २ २
हो३वाहायि। वृ। षोआ२३चा३यि। होवा३हायि।

१ २ र १ ११२ र
क्रदद्वा२३ना३४३यि॥(२) वृषोअचिक्रदद्वनायि। वृषो

* ऊ० गा० ९प्र० २अ० ५मा०।

२ १ र र २ १ २र
अचायिकद्दनायि । देवाना२३१९सो । मापवमा । न
१ ३ ३र २ ३र २ १र
नायिष्कार्त्ताम् । औहो३४वाहायि । गो । भायिरा
२ १ २ २ र १ २ १
२३ञ्जा३ । होवा३हा । नोअषा२३सा३४३यि । औ
२३४५ई । डा(३) ॥ ५ * ॥ [६]

२ र र र १ २
॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा ।
१ २ २ ५ २र २ २ २
स्तायासा२३४म् । द्रेवा७ । चमा३४५यि । न्वा२ ३ ४
१ २ ३र ४र ५ १ २
सो । रया३४ । औहोवा । पिशङ्गम्बक्ललारम् । पुरु
३ ५ १ २ ३र ४र ५ १
३४५ । स्पृ२३४हाम् । पवा३४ । औहोवा । माना२ ।
३ २ ५ ५ २ र र र र १ २
भिया३४५ । षा२३४सी ॥(१) पवमानाभियाहाउहोवा ।
१ २ २ ५ १र ३ २ ५
षासायिपा२३४वा । माना२ । भिया३४५ । षा२३४सी ।
१ २ ३र ४र ५ १र र र ३र २
पुना३४ । औहोवा । नोवारेपवमा२ । नोआ३४५ ।
३ ५ १ २ ३र ४ ५ १ १२
व्या२३४ये । वृषो३४ । औहोवा । आचा३यि । क्रदा

* ऊ० गा० ८प्र० १ख० ५सा० ।

३४५त्। वा२३४वे॥(२) वृषोअचिक्रदद्वाउवोवा। वा। वानायिवा२३र्षा। अचा२यि। क्रदा३४५त्। वा२३४ ने। देवा३४। औहोवा। ना॒ᳪसोमपवमा२। नना ३४५यिः। का२३४त्ताम्। गोभा३४। औहोवा। आ ञ्जा२। नआ३४५। षा३४५। षा२३४सी(३)॥ ६*॥[७]

॥ अभीवर्त्तम्॥ पवा३मा३नाऽभियर्षसोवा। पावमा ना। भियार्षा१सा२यि। पूनानोवा३१२३४। पवमा। नोआव्या१या२यि। वृषोआ१चा२यि। क्रदा३त्। वा २३४५। ना२३४५यि(२)॥ ८ †॥ [८]

॥ कालेयम्‡॥ वृषोआ३चिक्रदद्दनायि। वृषोअचा यि। क्रदद्दना२३यि। देवानाᳪसो३। मा२३४। पव

*ऊ० गा० ८प्र० १ख० ६सा०।

† ऊ० गा० ८प्र० १ख० ८सा०।

‡ "महाकालेयम्"—इति ख० पु० पाठः।

४र ५ २ २ १र २ १ २
माननिः । क्राऽ३र्त्ताम् । गोभायिरजौ । वा३४३ । ओ
५ ४र ४
३४वा । नोआपूर्षसायि । हो५ई । डा(३) ॥ ९ ॥ [९]

५ ४ ५र १र २ १र ४र ५ १
॥ पौरुमीढम् ॥ पवमा । नाभा३४औहोवा । आ
२ १ १र र १ २ १र र र
र्षसि । पवमाना । भियर्षा२३सायि । पुनानोवा । रे
२ र १ र २ १
पवा२३मा । नोअव्ययायि । वृषोआ२३चायि । क्रद
१ २ १ १ १ १ १
दा२३४५ना६५६यि । दत्वा३या२३४५(२) ॥ १२ † ॥ [१०]

२ऽ ऽ ऽ र
॥ आङ्गिरसाङ्गोष्ठम्‡ ॥ हाउहाउहाउवा । पुना
१र र २र १ २र र १ २र १ २ १ १ १ १ १ र २
नोवारेपवमानोअव्यये । इहा । उपा२३४५ । वृषोअ
१ २र १ २ १ १ १ १ २र १र र २र
चिक्रदद्वने । इहा । उपा२३४५ । देवानाꣳसोमपव
र १ २ १ १ १ १ २ऽ ऽ ऽ
माननिष्कृतम् । इहा । उपा२३४५ । हाउहाउहाउ

---

* ऊ० गा० ८प्र० २ख० ९सा० ।

† ऊ० गा० ९प्र० २ख० ११सा० ।

‡ "प्रमोहगोष्ठम्"—इति ख० पु० पाठः ।

१र २ र १र २ १ ३ १ १ १
वा। गोभिरञ्जानोअर्षसि। इहा। उपा २ ३ ४

१
५(२)॥ ५*॥ [११]

२र १र२र १ २ १ २ १ र
॥ कण्वरथन्तरम्॥ पावमानाभियर्षसायि। पवमा

२ १ २ २ र र र र र र ३
ना। भा३यार्षा३सायि। पुनानोवारेपवमानोअव्यया

५र २ १र ५ २ २
२३४ऐही। वृषोआ२३४चायि। क्र.दा३१उवा२३। ए३।

२ ३ २
वनआ(२)॥ १४ †॥ [१२]

२र १र २ १ २ १ २ १ र
॥ कण्वरथन्तरम्॥ मार्ज्यमानःसुहस्तिया। समुद्रे

२ १ १ २
वा। चा३मायिन्वा३सायि। रयिम्पिशङ्गम्बहुलम्पुरुस्पृ

३ ५ र २ १ ५ २ २
हा२३४मैही। पवमा२३४ना। भिया३१उवा२३। ए३।

२ ३ २
षसआ(१)॥ ७ ‡॥ [१३]

२ १ र १ १र
॥ अर्कपुष्पोत्तरम्॥ मृज्यमानःसुहस्त्या। इवायि।

* ऊ० गा० १९प्र० २अ० ५सा०।

† ऊ० गा० १९प्र० २अ० १४सा०।

‡ ऊ०गा० २०प्र० २अ० ७सा०।

२र १ १र र २ १ २र १
औहोवा२। समुद्रेवार्चमिन्वसि। ऊवायि। औहो

१ १ १ २ १ २ १ २ १ २र
वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ

१ १ २र र १ २ १ २र र
होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।

३ ५र र १ २र र १ २ १
वा२३४। औहोवा॥(१) पवमानाभियर्षसि। ऊवायि।

२र १ र १र र २र १ २र र १ ३र १
औहोवा२। पुनानोवारेपवमानोअव्यये। ऊवायि।

२र १ १र २ १ २र १ २र १
औहोवा२। वृषाअचिक्रदद्वने। ऊवायि। औ। हो२।

३ ५र र १र २ १ २र १
वा२३४। औहोवा॥(२) वृषोअचिक्रदद्वने। ऊवायि।

२र १ १र २ १ २र १ २र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा

र १र र २र र १ २र
२। देवानांसोमपवमाननिष्कृतम्। ऊवायि। औ

१ १र २ र १र २ १ २र १
होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।

३ ५र र १ १ २ र १र १ १र ३ १ १
वा२३४ औहोवा। अक्रन्देवाःपरमेवियो२मा२३

१ १
४५न्(३)॥ ८ *॥ [१४] १२

* ऊ० गा० ८प्र० २ख० ८गा०।

एतमुत्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

३ २ ३ १ ३ १ २ ३ १ २ ३ १ २ १ २
एतमु त्यन्दशक्षिपोमृजन्तिसिन्धुमातरम् ।
१ २ ३ १ २
समादित्येभिरख्यत ॥ १* ॥

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नव‡ मातरो भवन्ति । "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दशसङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति । अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
समिन्द्रेणोतवायुना सुतएतिपवित्रआ ।
१ २ २ ३ १ २
सꣳसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥

---

* ऋ० वे० ७, १, १९, १ ।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम् ।

‡ —तास्च नव "इमम्मेगङ्गे ( १, ६, ७, ५ )"—इति बह्वृक्श्रुता ज्ञेयाः । यथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी ( इरावती ), असिक्नी, मरुद्वृधा, वितस्ता, आर्जिकीया ( विपाट् ) ;—इत्येता नव ।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् ( २, ५ ) ।

§ "बहुलञ्छन्दसि ( ७, १, १० )"—इति भिस ऐसभावः ।

‖ ऋ० वे० ७, १, १९, २ ।

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते। "उत" अपि च "वायुना" समेति "सूर्य्यस्य "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३१ २ ३ १ २
सनोभगायवायवेपूष्णेपवस्वमधुमान्।
१ २ ३ १ २र
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" चर ॥ ३ ॥ १३

२र१ ३१ २ १२ १ २
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः। इहा। म्टजन्तिसिन्धुमातरा२म्। इहा। समादित्येभिरा२। इहा३। स्वा२३४तो६हायि ॥(१) समिन्द्रेणातवायुना। इहा। सुतएतिपवित्रआ२। इहा। सꣳसूर्य्यस्यरा२। इहा३। आ२३४यिभो६हायि ॥(२) सनोभगायवायवे।

* ऋ० व० ७, १, १८, ४।

१ १ १२ २
इ्हा । पूष्णे पवस्वमधुमा २न् । इहा । चारुम्मिंत्रे व

१ २ १ ५ ५
रु२। इहा३ । णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१]

५२४ २ ४ ५ ११
॥ अयासोमीयम ॥ एता३मू३त्यन्द्वचिपाः । मृज

१ २२ १
न्तिसायि। धुमा२ता२३४राम् । सामादित्या२३यि ।

२ ४ ५ ४ २ ४२ ५२ २
भिरा३ख्या५ता६५६ ॥(१) समा३यिन्द्रे३णोतवायुना । सु

१२ ३ ५ १ १२ १
तएतायि । पवा२यित्रा२ ३ ४ आ । सा३सूरिया २ ३ ।

२ ४ ५४ २ ४२ ५२
स्यरा३स्मा५यिभा६५६यिः ॥(१) सनो३भा३गायवायवायि ।

१२ १२ ३ ५ १ २ १
पूष्णेपवा । स्वमा२धू२३४मान् । चारुम्मित्रा २ ३ यि ।

२ ४
वरु३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थः खण्डः ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २अ० ७सा० ।

† ऊ० गा० १२प्र० २अ० १४सा० ।

‡ "उक्तो माध्यन्दिनः पवमानः"—इति वि० ।

अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा ।

१२ २ ३ १ ३ १ २ ३ १ २
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

३ १ ३ २ ३ १ २
क्षुमन्तो याभिर्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" क्षीराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च "सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् ( ६, १, ३४ वा० )" —इति सम्प्रसारणम, परपूर्वत्वे, "छन्दसीरः ( ८, २, १५ )"—इति मतुपो वत्वम, "वाच्छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रै-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रै-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि ( ६, ३, ९६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना ( ६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

* 'इदानीं इष्टानि'—इति वि० ।

† 'रेवतीषु वारवन्तीयं इष्टं भवति'—इति वि० ।

‡ ऋ० आ० १, २, १, ९ (१भा० ३५३पृ०)=ऋ० वे० १,१,३०,३ ।

बहुलम् (६, २, १९९)"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। द्युमन्तः—द्यु द्यु रु कु शब्दे (अदा० प०), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् (६, १, १७६)"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे (दि० प०), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

अथ द्वितीया।

१ २ १ २ १ २ ३ १ ३ १ २ ३ १
आघत्वावांत्मनायुक्तस्तोतृभ्योधृष्णवीयानः।

३ २उ ३ २३र २र
ऋणोरक्षन्नचक्र्योः ॥ २ * ॥

हे "धृष्णो!" धार्ष्ट्ययुक्तेन्द्र!† "त्वावान्" त्वसदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "इयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतृणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ ऋणोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्र्योः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्या

---

* ऋ० वे० १,२,३०,४।

† 'धृष्णो—धारण-स्वभाव'—इति वि०।

‡ 'घ—इति पद-पूरणः'—इति वि०।

नम् ( ५, २, ९४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च ( ७, २, ९८ )"—इति मपर्य्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ९१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे ( ३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते । त्मना—"मन्त्रे-ष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः । धृष्णो—जि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आम-न्त्रितानुदात्तत्वम् । ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्या-दिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम् । ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), 'बहुलञ्छन्दस्यमाङ्योगेऽपि"—इत्यडागमा-भावः, विकरण-स्वरेणान्तोदात्तत्वम् । अक्षम्—"अक्षस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम् । चक्रोः—अकारस्येका-रश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया ।

१र २र ३१र ०र ३२
आयद्द्वः शतक्रतवा कामञ्जरितॄणाम् ।
३२उ ३१र २र
ऋणोरक्षन्नशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र ! "यत्" "द्रुवः" धनं कामितार्थ-

* ऋ० वे० १,२,३,५ ।

रूपम् स्तोतृभिः आप्तव्यमस्ति तं कामं "जरितॄणां" स्तोतॄणा-मनुग्रहाय "आ ऋणोः" आनीय प्रक्षिपसि । तत्र दृष्टान्तः—"शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् (४, १, ७३) ङीबन्तत्वादाद्युदात्तः (३, १, ४)॥ ३ ॥ १४

॥ वारवन्तीयोत्तरम्॥ रेवतीर्नाऔहोहायि । सा धामा२३४दायि । इन्द्रायिसा२३४हा । तुतुविवा३४ । औहोवा । इहा२३४हायि । उङ्कवा२३४जाः । क्षुमन्तः । याभिर्मदा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । मा । एह्रियाऽ६हा ॥ (१) आघत्वावा औहाहायि । त्मानायू२३४क्ताः । स्तोतृभ्यो२३४हायि । धृष्णुवीया३४ । औहोवा । इहा२३४हायि । उङ्कवा२३४नाः । ऋणोर । हानचक्रा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । योः । एह्रियाऽ६हा ॥ (२)

१र र र १ २ ३ ५ २र १
आयहु वाओहोहायि। प्रातर्का२३४ताउ। आकामा२३
५ १ १ ३र ४र ५ १ २ ५
४५हायि। जरितृ३४। औहोवा। इहा२३४हायि।
२ ३ ५ २ १र २ १ ७ २ ३र २र ५
उक्तवा२३४णाम्। ऋणोर। चान्नप्रचा३४। औहोवा।
१ २ ५ २र २ ५र ५
इहा२३४हायि। औहो३१२३४। भीः। एहियाईहा।
४
होप्५ई। डा(३) ॥ ७ * ॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा ।

३ २ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
२ ३ १ २ ३ २
जुहूमसि द्यविद्यवि ॥ १ † ॥

"सुरूपकृत्नुं" शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं 'ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः ॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), 'नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

---

* ऊ० गा० ३प्र० १ख० ७गा० ।

† छ० आ० २,२,२,१ ( १भा० २६६पृ० )=ऋ० वे० १,४,७,१ ।

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम्। जुह्मसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सु द्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया।

१ २ ३ १ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब।

३ २उ ३ २ ३ १ २
गोदाइद्रेवतोमदः॥ २ *॥

हे "सोमपाः" सोमस्य पातरिन्द्र ! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३), "लिति(६,१,१९३)-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,०,२ ।

कारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२,४,७३)—इति शपो लुक्, हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया।

१ २ ३ १ २    ३ १ २    ३ २
अथाते अन्तमानांविद्यामसुमतीनाम्।

२ ३ १ २ ३ १ २
मानोअतिख्यआगहि ॥ ३ * ॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-क्तत्स्वरेणान्तोदात्तत्वैव (६,२,१३९)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३।

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)" —इति लुङ् न भवति॥ ३॥ १५

उभेयदिन्द्ररोदसीति-तृचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

३ १र २र ३ १ २ ३ १ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।

३ १ २ ३ १ २ ३ १ ३ ३ २
महान्तन्त्वामहीनाꣳसम्राजञ्चर्षणीनाम्॥

३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ *॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (प०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० सा० ४,१,४,१० (१भा० ७७७पृ०)=ऋ० वे० ८,७,२२,१।

"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [ जनेर्णिजन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"—इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्य इति ङीप् (४, १, ५) ॥ १ ॥

अथ द्वितीया ।

२ २ २ ३ १ २३२ ३ १ २
दीर्घꣳह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ २ ३ २ ३ २ ३ १र १र
पूर्वेणमघवन्पदावयामजोयथायमः ।
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एव मायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः (८, ३, १)"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् (७, ४, ७६)"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

* ऋ० वे० ८, ७, ११, ५ ।

पादेन "अजः" छागः "वर्यां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रष्यामः शत्रून् [नियच्छसि--यमेर्लेटाड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया।

१ १ ३ १२ २२ ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम्।
३ १२ २२ ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माꣳअभिदासति॥
३ १२ २२ ३ १२ २२
देवोजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"—इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३।

† 'अभिदासति—हिंसां करोति'—इति वि०।

अथ षष्ठे खण्डे *—

परिस्वानइति-तृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत् ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन् ? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ ३ २उ ३ १ २ ३ १र १र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

---

* "इदानीमार्मेयो वक्तव्यः । तत्र च वैद्न्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्षाणि'—इति वि० ।

† ऋ० आ० ५,१.४,९ ( २भा० २६पृ० )=ऋ० वे० ९, ८, ८, १ ।

‡ ऋ० वे० ९. ८, ८, २ ।

हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः ॥ २ ॥

अथ तृतीया ।

१२ १२ ३ १ २ ३ १२ ३ १ २
त्वेविश्वसजोषसोदेवासःपीतिमाशत ।

१ २ ३ १ २
मदेषुसर्वधाअसि ॥ ३ * ॥ १७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन् ॥ ३ ॥ १७

॥ तृतीयंवैदन्वतम् ॥ पा ऽ ५रि। त्वानो३गा३यिरि
५ २ १ २२ १२ १२ ३ २१ २ १ २१ १
ष्ठाः। पवित्रेसो। मोअक्षरात्। पवित्रे। सोमो२३।
४ ५ २ ४ २ ४ ५ २ १
क्षारात् ॥(१) तू ऽ ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु
२ १ २ १ २ १ १ १ २ ४ ५
प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः ॥(१)
१ २ ४ २ ४२ ५ १२१२ १ १ २ ३२
तू ऽ ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

* ऋ० वे० ६, ८, ८, ३ ।

शता । देविसःपी । तिमा२३ । शाता । औयि ।
मही । वा३४३ओ३४वा । षुवा । सर्वधाः । असायि ।
मा२दा२३४औहोवा । ए३ । षुसर्वधाअसी२३४५॥८*॥[१]

॥ वैदन्वताद्यम् ॥ पारौ । स्वानोगिरिष्ठाः । पवा
२यिवे२३४सो । मोअत्तारा२त् ॥(१) तूवाम् । विप्र
स्त्वङ्कविः । मधूरप्रा२३४जा । तमन्धामासा२ः ॥(२)
तूवे । विश्वेसजोषसः । देवा२सा२३४ःपी । तिमाशा
ता२ । मदायिषूसा३ । ई३या३ । वंधो२३४वा । आ
५सो६हायि ॥ ८ † ॥ [२]

॥ चतुर्थवैदन्वतम् ॥ औ३होयि । इ्हहाहहायि ।
और्हो२३४वा । परायिस्वा२३४नो । गिरा२३४यिष्ठाः ।

---

* ऊ० गा० ३प्र० २ख० ८सा० ।

† ऊ० गा० ३प्र० २ख० ९सा० ।

पावित्रे२३४सो। सोअक्षा२३४रात्॥(१) तुवंवा२३४यि

प्रः। तुवङ्का२३४वीः। मधुप्रा२३४जा। तमन्धा२३४

साः॥(२) तुवंवा२३४यिश्वे। सजोषा२३४साः। देवासा

२३४ःपी। तिमाशा२३४ता। मदायिषू२३४सा। वंधा

आ२३४सो। औ३होयि। इहाहहायि। औ२होर

३४५वा६५६। ए३। उपा२३४५(३)॥ १० *॥ [३]

॥ ऐध्मवाहाद्यम्॥ परिस्तुवाइहा। नोगायि। रा

यिष्ठाओ२३४वा। ई२३४हा। पवित्रेसोमो३आ। हा

राहो२३४वा। ई२३४हा॥(१) तुवंविप्रइहा। तुवाम्।

कावाओ२३४वा। ई२३४हा। मधुप्रजाता३मा। धा

साओ२३४वा। ई२३४हा॥(२). तुवेविश्वइहा। सजो।

षासाओ२३४वा। ई२३४हा। देवासःपीतो३मा। शा

---

* ऊ० गा० ९प्र० २अ० १०सा० ।

२ १ ५ २ ५ २ १ २ ३
ताओ२३४वा । ई२३४च्चा । मदायि । षूसाओ२३४
५ २ ४ १ ७ ३
वा । ई२३४चा । वंधाः । वंधा२आ२३४५सा६५६यि ।
२ ५
ई२३४च्चा(३) ॥ ८ * ॥ [४]

१ २ र १ २
॥ सत्वितम् ॥ परिस्तुवानः । गा२यिरिष्ठाः । पवा
१ २ १र १ २
२यि । त्रे२३सो । मोआ२ञ्चारात् । तुवंविप्रस्तु ।
१ २ १ २ १ १
वा२कवायिः । मध२ । प्रा२३जा । तमा२न्धासाः ।
१ र २ र १ २र १ २ १
तुवेविश्वे स । जो२षसाः । देवा२ । सा२३ःपी । ति
१ २ १ ७ २
मा२श्राता । मा२३दायि । षू२सा । वंधा२३ः । हा
५
उवा३ । आ२३४सी(३) ॥ ६ * ॥ [५]

२ १ २ १ २ १ २ १
॥ जराबोधीयम् ॥ परिस्तुवोवा । नोगिरिष्ठाः । पवा
२ र १ २ १ २ १ २
यित्रे२३सो । मोअच्चारात् ॥(१) तुवंविप्रोवा । तूवङ्क
२ १ २ १ २ र १
वायिः । मधूप्रा२३जा । तमन्धासाः ॥(२) तुवेविश्वो

* ऊ० गा० ८प्र० १ख० ८सा० ।
† ऊ० गा० ८प्र० १ख० ६सा० ।

२ १ र २ १ २र १ २ र १
वा। साजोषसाः। देवासा२३:पो। तिमाशाता। म

१ ४ ५र ३ १
दायिषू१सा२३र्वा। धाः। असो३४५ई। डा(३)॥१८*॥[६]

२ १ १ २र
॥ सुरूपोत्तरम्॥ परिसुवौहो२। इया। नोगिरा

१ १र १ २र १
यिष्ठा२ः। पवित्रे सौहो२। इया। मोअत्तारा२त्॥(१)

२ १ २ १ १
तुवंविप्रौहो२। इया। तुवङ्कावा२यिः। मधुप्रजौहो२।

१ २ १ २र १ १ १
इया। तमन्धासा२ः॥(२) तुवेविश्वौहो२। इया। स

र १ र र १ १ २ र १
जोषासा२ः। देवासःपौहो२। इया। तिमाशाता२।

र१ १ २१र २ १
मदेषुसौहो२। इया। वंधाआ२३सा३४३यि। ओ२३

४५ई। डा(३)॥ २†॥[७]

२र र २ र
॥ हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। प

१र २ १ २ ३ ५ २र
वित्रेसो३। मोअत्ता२३४रात्॥(१) हाउतुवंविप्रस्तुव

१ २ १ २ ३ ५ २र
ङ्कविर्हाउ। मधुप्रजा३। तामन्धा२३४साः॥(२) हाउ

---

* ऊ० गा० १२प्र०१ अ० १८सा० ।

† ऊ० गा० १४प्र० १अ० १३सा०।

तुवेविश्वेसजोषसोहाउ। देवासःपोइ। तायिमांशा२

३४ता। ऐ२हो१आ२३यिहो। मदायिषू३सा। वंधाः।

आ२सा२३४औहोवा। हवियाते२३४५(३)॥८*॥[८]

॥आम्नदम्॥ परिसुवानऐ। होऐहो२३४या।

गिरिष्ठाऐ२होऐ२होइया। पवित्रेसोमोअत्तरदै२होऐ

२होइया॥(१) तुवंविप्रस्तुऐ। होऐहो२३४या। वञ्च

विरै२होऐ२होइया। मधुप्रजातमन्धसऐ२होइया॥(२)

तुवेविश्वेसऐ। होऐहो२३४या। जोषसऐ२होइया।

देवासःपीतिमाशतऐ२होऐ२होइया। मादायिषुसा३१

२३। वंधो२३४वा। आपूसो६हायि(३)॥९†॥[९]

* ऊ० गा० १४प्र० १ख० ८सा०।

† ऊ० गा० १५प्र० १ख० ९सा०।

२ १ ४र र ५
॥ दावसुनिधनम् ॥ परिस्रुवा२३नोगिरिष्ठाहाउ ।

१ २र र र १ २ १ २ २
प।वित्रेसो । मोआक्षा१रा२३त् । होवा३हायि ॥(१)

१ ४ ३ १ २र १ २
तुवंवार३यिप्रस्तुवङ्कविर्हाउ । माधुप्रजा । तमान्धा१

१ २ २ २१र ४र र
सा२३: । होवा३हायि ॥(२) तुवेवार२३यिश्वेसजोहाउ ।

१ र २ र १ र १ २ २ १
दायिवासःपो । तिमाम्रा१ता२३ । होवा३हायि । म

२ १ २ २ १र ३
दायिषू१सा२३ । होवा३हा । वंधाः । आ२सा२३४

५र र २ २र १ ३ १ १ १ १
औहोवा । ए३ । दावम्२३४५(३) ॥ १० * ॥ [१०]

१ २र
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्रुवानः । गा२यिरि

१ २र र र १ ७ २र २
ष्ठाः । पावित्रेसो । मोआहरा२३४त् । हाहोयि ॥(१)

१ २ १ २र १ ७
तुवविप्रस्तु । वा२ङ्कवायिः । माधुप्रजा । तमान्धसा

५र २ १ र २ र १
२३४: । हाहोयिं ॥(२) तुवेविश्वेस । जो२षसाः । दा

* ऊ० गा० १५प्र० १ख० १०गा० ।

र २ र १ ७ ३र २ १ र २
यिवासःपो। तिमाशता२३४। हाहोयि। मदेषुसार्वा

२ १ २ ४ ५ ४ ५
३धाः। असा। औ३होवा। ई३डा(३)॥ ११ * ॥[११]

२ र र र र १ २
॥ हाविष्कृतम्॥ परिस्रुवानोगाहाउरायिष्ठाः। प

१ र र २ र
वित्रेसो। मोआहा२३रात्॥(१) तुवंविप्रस्तुवहाउ

१ २ १ २ २ र
कावायिः। मधुप्रजा। तमन्धा२३साः॥(२) तुवेविं

र र र १ २ र१र र २
श्वेसजोहाउषासाः। देवासःपायि। तिमाशा२३ता।

१ २ १र ३ ५र
मदा२होश्यि। षू२३सा। वंधाः। आ२सा२३४औ

र २ १ ३ १ १ १ २
होवा। हविष्कृते२३४५(३)॥ १२ † ॥ [१२]

१ २र १र र र २
॥ गौषूक्तम्॥ परिस्रुवानोगौ। हौहोवाहायि। रि

१ • र र २ १ १
ष्ठाः। पवित्रेसोमऔ२। ऊवायि। ऊवा२यि। हा

१ २ १ र र २ २
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

---

* ऊ० गा० १५प्र० १अ० ११सा०।

† ऊ० गा० १५प्र० १अ० १२सा०।

१२ १ १ १
मधुप्रजातमौ२। इवायि। इवा२यि। धामा२: ॥(२)

१२१२ १२ २ १ १ २२ २
तुवेविश्वे सजौ। चौहोवाहायि। षसा:। देवास:पी

२ १ १ १२
तिमौ२। इवायि। इवा२यि। आता२। मदेषुस

२ १ १ १२
वंधौ२। इवायि। इवा२यि। आता२। मदेषुस

२ १ १ १
वंधौ२। इवायि। इवा२यि। आसा२३यि। चौ

३ ४२ २ २ १२ २ ३ १११
२वा२३४औहोवा। अग्निराइता२३४५:(३) ॥ ७* ॥[१३]१७

ससुन्वे—इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १२ २२ ३ २ ३ १ २ १ १२ ३२
ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।
२ ३ १ २ ३ २
सोमोयस्सुक्षितीनाम् ॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

* ऊ० गा० १.प्र० २खं० ७सा०।

† ऋ० आ० ६, २, ४, ५ ( २भा० २३३पृ० )=ऋ० वे० ७, ५, १८, २।

अथ द्वितीया ।

१ २ ३ १ २ ३   २ ३   १ २   ३ १   ३ १ २   ३ १ ३   १ २
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्य्यमणाभगः ।
१   २ र ३ १ र   २ र ३   १ २   ३ २ ३ १ १ २   ३   २
आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम ! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने ( भ्वा० प० ), लेटयड़ागमः ] "यस्य" यञ्च सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्य्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे । तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वामभिषुणोमीत्यर्थः ॥ २ ॥ १८

१   १   १ र र   २   १
॥ दीर्घम् ॥ सास् । न्वेयोवसू२३नाम् । योरा२
१   र र   १   २   १   २   १   २
यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसुक्षि

* ऋ० वे० ७, ५, १९, ४ ।

† सुपांसुलुगित्यार्वे ( ७, १, ३९ ) रूपम् ।

‡ "भगो व्याख्यातः ( ३, १६ ) । तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * * । अन्धो भग इत्याहु'रनुत्सृप्तो न दृश्यते । प्राशित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० दै० ६, १३-१४ ।

१ ५ ५ १ १ १
तार३४यिनोईहायि ॥(१) सोमाः। यःसुचिताऱ३ यि

२ १ १ २ १ १ १
नाम्। यास्या२ताई२। द्रःपिबाद्यस्यमद्ध२३ताः। या

१ २ १ १ २
स्या२ताई२। द्रःपिबाद्यस्यमद्ध२३ताः। या२ ३ स्या।

१२ २ १२ ५ ५ १ २ १२ २
वार्य्यमणाभा २ ३ ४गोईहायि ॥(२) यास्या। वार्यमणा

२ १ १ १२ २ २ १२ २
भा२३गाः। आये२नामी२। त्रावरुणाकरामा२३हा

१ १ २ २ १२ २ १
यि। आये२नामी२। त्रावरुणाकरामा२३हायि। आ

२ १ १२ १ ५ ५
२३यिन्द्राम्। अवसेमा२३४द्यौईहायि(३)॥ ११* ॥[१]

२ १ २ ४ २ २ ५ २२ १
॥ सफम्॥ समुन्वे३यः। वासू२३४नाम्। योरा

२ १ २ २ २ ५ १२
या२म्। आनायिता३या३ः। इडा३२३ ४ नाम्। सो

१ २ ४ २ ५
नाः। याःसू३क्षी३। ता३४पूयिनोईहायि(१) ॥१४†॥[२]१८

* ऊ० गा० ३प्र० २ख० ११सा०।

† ऊ० गा० ११प्र० १ख० १४सा०।

तंवइति-तृचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा।

१ २   ३ १२   ३ २३ १२
तंवःसखायोमदायपुनानमभिगायत।
२ ३ १२३ १ २   ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः॥१*॥

हे "सखायः" ऋत्विजः! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत। "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः चीरादिभिश्च स्वादू-कुर्वन्ति, तद्वत् "हव्यै" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुति-भिश्च "स्वदयन्त" स्वादूकुर्वन्ति॥१॥

अथ द्वितीया।

१ ३ १ २   ३ २ ३ १ २   ३ १ २
सवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते।
३ १२ ३१२ ३ २ ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः॥२†॥

"हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡। तत्र दृष्टान्तः—"वत्स-

---

* ऋ० आ० ६, २, ३, ४ (२भा० २०८पृ०) = ऋ०, वे० ७, ५, ८, १।

† ऋ० वे० ७, ५. ८, १।

‡ 'इन्दुः हिन्वानः याज्यमानः, अज्यते चक्षु चं पत्रे अनौभिभिः'—इति वि०।

इव" वत्सो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [ भूषणार्थे "सम्प-र्युपेभ्यः (६, १, १३७)"—इति सुडागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम् ॥ २ ॥

अथ तृतीया।

२ १२ २२ ३ १ २ ३ १२ २२ ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः ॥ ३ † ॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा ॥ ३ ॥ १९

२ १ ५ २
॥ कार्णश्रवसम् ॥ तां२३४वः। सा२३४खा। सा२

५ २२ १ १ १२ १ २ २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

---

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, ९।

१ २ १ १ २ ३र २ १ १२र २
ग्रायिप्रुन्नह । व्यः स्वदया२३ । तगूर्त्तिभा३४३यिः ॥(१)

३ ५ ३ ५ २१र २ १
सा२३४व । त्मा२३४ई । वमातृ२३भायिः । आयिन्दु

२ र र १ २ १ २र१र १र ३ १
श्चिन्वा । नोअज्या२३तायि । दायिवावीर्मा । दोमति

१ २ ३ २ ३ ५ ३
भा२३यिः । परिष्कृता३४३ः ॥(२) आ२३४यम् । दा२३

५ ३१र २ १ २ र १र २
४क्षा । यसाधा२३नाः । आयश्चप्रङ्गां । यवीता३२या

१ २र१र २र ३ २ १ १ ३ २ १
यि । आयन्देवे । श्योमधुमाधतरःसुता३४३ः । ओ२३

४५ई । डा(३) ॥ १२ * ॥ [१]

२ र १र १र १
॥ सुज्ञानम् ॥ तंवःसखा । योमदाया । पुनाना]

र १ २ १ र १ ५
मा२ । भिगायता । ग्रिप्रुन्नाचाद्दा२ । व्यैःस्व । दा

५र र १र २ १ १११
२या२३४औद्दोवा । तगूर्त्तिभिरे३उपा२३४५(१) ॥१०†॥[२

* ऊ० गा० ३प्र० २ख० १२सा० ।

† ऊ० गा० ८प्र० १ख० १०सा० ।

॥ काश्यीतम् ॥ तंवःसखा। योमदा२३या३४। पुनानमा। भिगाया२३ता३४। भ्रिघ्नुन्नहा। व्यैःसूदयन्तगू। तां.२यि। भा२३४। औहोवा। ऊ२३४पा(१) ॥ ११ * ॥ [३] १९

सोमाःपवन्तइति-त्रचात्मकं चतुर्थं सूक्तम्;

तत्र, प्रथमा।

सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ १ † ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा ॥ १ ॥

* ऊ० गा० ८प्र० १খा० ११সা१।

† ऋ० সা० ६, २, १, ४=(१भा० १५९ पृ०)—ऋ० वे० ७, ५, १, ५।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते ॥ २ * ॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्य्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
सुषाणासोव्यद्रिभिश्चिताना‌गोरधित्वचि ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ ३ ‡ ॥ २०

"गोः" अनुडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

---

* ऋ० वे० ७, ५, ३, १ ।

† 'दर्शतासः — सर्वस्य द्रष्टारः' — इति वि० ।

‡ ऋ० वे० ७, ५, ३, २ ।

"इषम्" अन्नम् अभितः "समस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

॥ गौरीवितम्† ॥ सोमाः । पवा३ । तइन्दवाः । अस्मभ्यङ्गातुवित्तमा२३ः । मायिताः स्वाना३१२३ः । अरे५पसाः । सूवाधिया३१२३ः । सुवोवा । वा५यिदोइ्हायि ॥(१ तेपू । तासो३ । विपश्चिताः । सोमासो दध्याशिरा२३ः । सूरासोना३१२३ । दशा५तासाः । जायिगन्तवा३ १ २३ः । ध्रुवोवा । घा५र्त्तों६हायि ॥(२) सुषा । णासो३ । वियद्रिभायिः । चितानागोरधित्व चा२३यि । आयिषमस्मा३१२३ । भ्यमा५भिताः । सामस्वरा३१२३न् । वसोवा । वा५यिदोइ्हायि(३) ॥१३‡॥[१]

---

* 'समस्वरन्— उच्चाटयन्'—इति वि० ।

† "महागौरीवितम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ३प्र० २ख० १२सा० ।

२र र २

॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म

र१ १ १ २ २ १ २ १ १

भ्यङ्गा३तूवित्तमा३ः। हा३हा। औ३हो३वा। आयिही

र र र१ १र १ २ २ १ १

२। मित्रास्वाना३आरेपसा३ः। हा३हा। औ३हो

२ १ र र २ २ २ १

३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ

२ २ १ १ ३ ५र र

३हो३वा। आयिही२। सुवः। वार्यिदा२३४औहो

२ ररर र १ र र र १ र

वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ

२ १ १ १ १ १ १ र

शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू

र र १ र १ १ १ २ २ १

रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ

१ २ २ २ २ १

यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।

१ १र ३ ५र र १

आयिही२। ध्रुवाः। घार्त्ता२३४औहोवा ॥(२) सु

र र र २ र र र१ १

षाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।

१ १ १ २ २ १ १

हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

२ २ २ ३ २ २ १
मभिता३ः । हा ३ हा । औ३हो ३ वा । आयिही२ ।
१ २ २ २ ३ २ २ १
सामस्वरा३न् । हा३हायि । औ३हो३वा । आयिही
१ ३ ५र र २ १ ३१११
२ । वसु । वा२यिदा२३४औहोवा । मधुश्च्युता२३४
१
५ः(३) ॥ १४ * ॥ [२]

२र १ २ ५
॥ वाङ्निधनङ्कौत्सम् ॥ सोमाःपावा३१२३४ । तइ ।
३ २ २ १ १ २ ५ ३ २ ३ १
द्वा३ । अस्मभ्यङ्गा३१२३४ । तुवि । तमा३ः । मित्रा
२ ५ र ३ २ २ १ २
सखाना३१२३४ः । अरि । पसा३ः । सुवाधीया३१२३ः ।
४ २र १ १ ५ ३ २
सुवा५र्विदा३ ॥(१) तेपूतासो३१२३४ । विपः । चिता
२र १र र २ ५र ३ २ २र १
३ः । सोमासोदा३१२३४ । धिया । शिरा३ः । सूरासो
२ ५ ३र २ २ १ २ ३
ना३१२३४ । दर्श । तासा३ः । जिगात्नावा३ १ २ ३ः ।
४ २ १ २ ५ ३ २
ध्रुवा५घृता३ ॥(२) सुषाणासो३१२३४ । विय । द्रिभा
२ १र र २ ५ ३ २ २ १
३यिः । चितानागो३१२३४ः । अधि । त्वचा३यि । वृषा

* ऊ० गा० ३प्र० २ख० १४गा० ।

२ ५ २ २ १ १ २
मास्मा३१२३४। भ्यम। भिता३ः। समास्वारा३१२३

४
न्। वसूपुविदाउ(३) ॥ १५ * ॥ [३]

५र र ३२१ ४ ५ २ १ १ १
॥ ऐडक्रौञ्चम् ॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा।

१ ३२१ २ ३ ५ १र १र १र११ ११
तुवित्तमाः। मायित्राओ२३४वा। स्वानाअरेपसा २ ३

११ १र २१ २१ २ ५र र१र १र
४ ५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः ॥(१)तेपूतासो

३ ४ ५ १र १ १र १ १ १र २ १ ३ १
विपश्चिताः। सोमासोदा। धियाशिराः। स्वराओ२३

५ १र ११ १र १ ११११ ३ २ १ १ १र
४वा। सोनदर्श्रतासा२३४५ः। जिगत्नवाः। ध्रुवाघा

२ ५ र १र १र ३ ४ ५ २ १
२३त्ता३४३यि ॥(२) सुष्वाणासोवियद्रिभायिः। चिता

१र १ २ ३ २१ २ ३ ५ २ १
नागोः। अधित्वचायि। आयिषाओ२३४वा। अस्म

२ १२ ११११ २ २ १ २१ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।

१
ओ२३४५ई। ई। डा(३) ॥ १६ † ॥ ४]

१र १ २ ४५ ५ २
॥ श्यावाश्वम् ॥ सोमा३१ः। पां३व। तइ। दा३

---

* ज० गा० ३प्र० १ख० १५गा०।

† ज० गा० ३प्र० १ख० १६गा०।

वः। एहिया। आ। साभ्यञ्जातू। वि। तमा२ः। एहिया२। मित्रास्त्वानाआ३रे३। पा२३४साः। ऐ हा२यि। एहिया२। सुवाधियाःमू३वा३ः। वा३४५यि दो६हायि॥(१) तेपू३१। ता ३ सो। विपः। चा ३ यितः। एहिया। सो। मामोदधायि। आ। गिरा२ः। एहिया२। सूरासोनादा३र्गा३। ता२३४साः। ऐहा२यि। एहि या२। जिगत्नवोध्रू३वा३ः। घा ३ ४ ५ तौ६हायि ॥(२) सुषा३१। णा३सो। विप। द्रा३यिभिः। एहिया। चायि। तानागोरा। धि। त्वचा २यि। एहिया२। वृषमखाम्या३मा३। भा२३४यिताः। ऐहा२यि। एहिया२। समस्वरान्वा ३ ह ३। वा ३ ४ ५ यिदो ६ हा यिं(३) ॥ १६ * ॥ [५]

---

* ऊ० गा० १५प्र० २ष० १६सू०।

२र र २ १
॥ आभीगवम् ॥ सोमाःपवन्तआ१यिन्दावाः। अ
र २ १ १ र २ १र १र
स्मभ्यम्। गातूर२३वा। ऊम्मा२१ऽ२। तमामित्रास्स्वा
१र १र१ ३ १ १ १ १ १ १ १ २ १ १
नाअरेपसा२३४५ः। सूवा३उवा। धी२याः। स्व२३वाः।
१ १ ४ ५ १र र र र २ १र
विदा। औ३होवा ॥(१) तेपूतासोविपा१श्चायिताः। सो
र २ १ १ र र २र १
मासः। दधा२३आ। ऊम्मा२१ऽ२। श्रिरःमूरासोन
२ १र १ १ १ १ १ १ १ २ २ १
दर्शतासा२३४५ः। जायिगा३उवा। त्वा२वो। धू२३
२ १ १ ४ ५ २र र र
वाः। घृता। औ३होवा ॥(२) मृषाणासोविया१द्रा
२ १ र र र २ १
यिभायिः। चितानाः। गोरा२३धा। ऊम्मा२१ऽ२।
१र २१ २ १ ३ १ १ १ १ १ १ २ १
त्वचीषमस्मभ्यमभिता२३४५ः। सामा३उवा। स्वा२रा
२ १ २ ४ ५
न्। वा२३स्व। विदा। औ३होवा। हो५ ई।
डा(३) ॥ १७* ॥ [६]

२र र २ १ २
॥ निषेधम् ॥ सोमाःपवन्ता३इन्दवाः। अस्माभ्य

* ज० गा० १५प्र० १ख० १७सा०।

१ २ १ १ २ १ ४ ५ २
ङ्गा । तुविन्तमा२ः । इहा३ । मायिन्वा३स्खानाः । हा

३ ३ १ २ १ २ १ २ १ २ ४ ५
हो२३४हा । अरेपा२३सा: । इहा३ । सूवा३धीयाः ।

२ १ ५ ३ १ ४ १ २ २ २ २
हाहो२३४हा । सुवा३र्वा५यिदा६५६: ॥(१) तेपूतासो

२ २ १ २२ १ २ २ १ १ २
वा३यिपश्चिता: । सोमासोदा । धियाशिरा२ः । इहा

१ २ ४ ५ २ ३ ५ २ १ २
३ । व्हरा३सोना । हाहो२३४हा । दर्शता २ ३ साः ।

१ २ १ २ ४ ५ २ ३ ५ ३ २
इहा३ । जायिगा३त्नावा: । हाहो२३४हा । ध्रुवा३

४ २ २ २ २ २ १
वा५र्ता६५६यि ॥(२) सुषाणासोवा३यद्रिभायिः । चिता

२२ १ २ १ १ २ १ २ ४ ५
नागो: । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।

२ ३ ५ २ १ २ १ २ १ २ ४
हाहो२३४हा । भ्यमभा२३यिता: । इहा३ । सामा३स्व

५ १ ३ ५ ३ २ ४ ३ १ १ १
रान् । हाहो२३४हा । वसू३वा५यिदा६४६: । हे२३४

१
५(३) ॥ १८* ॥ [७]

२२ २ १ २ २२ १ १
॥ क्रौञ्चाद्यम् ॥ सोमा'पवोहो । ताइन्दवा: । अस्म

* ऊ० गा० १५प्र० २ख० १८सा० ।

१ २ ४ २र १र र
भ्यङ्गा३। तूवा३यिता५मा६५६:। मित्रारस्वानौवो।
२र १र २र १ २ ४
आरेपसाः। सुवाधिया३:। सूवा३यिवा५यिदा६५६: ॥(१)
२र र १र र २र १ २र र र १ २
तेपूतासौवो। वीपश्चिताः। सोमासोदा३। धाआ३
४ २र र १र र २ १र २
शा५यिरा६५६:। सूरासोनौवो। दर्शतासाः। जिग
१ २ ४ २ र १र र
त्नवो३। ध्रूवा३धा५र्त्तो६५६यि ॥(२) सुषाणासौवो।
२र १ २ र र १ २ ४
वीयद्रिभायिः। चितानागो३:। आधा३यित्वा५चा६५
२ १ र २र १ २ १
यि। दूषमसौवो। भ्यामभिताः। समस्वरा३न्। वा
२ ४
सू३वा५यिदा६५६:(३) ॥ १ * ॥ [८]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५:प। वा ३ न्ता ३ इन्दा
५ ० १ २१ २ २ १ १र
वाः। आसभ्यङ्गा। तूवायित्ता३माः। मित्रा२स्वा।
र २ १ २ २ १र
नाआर२३रे। ऊम्मायि। पा३साः। सूवाधियःसुवार२
२ २ १ २ १र र र र र २
विदाउ ॥(१) दास्तायि। पूतासोविपश्चितःसोमासोदा।

* ज० गा० १६प्र० १ख० १खा०।

२ १ २ २ १८ १ २ १
धा३आआ३यिराः । सूरा२सः । नदा२३र्या । ऊम्मा

२ २ १ २ ३१ १
यि । ता३साः । जायिगत्नवोधृवा२घृनाउ ॥(२) तायि

२ १२ २ २ २ २ २ १ २ १
सू । प्राणासोव्यद्रिभिश्चितानागोः । आ३धायित्वा३चा

१ १ २ १ २ १
यि । दूषा२म । स्मभ्या२३मा । ऊम्मायि । भा३यिताः ।

१ ३ १ १११
सामस्वरन्वमूर्श्वविदाउ । वा३४५(३) ॥ १४ * ॥ [९] २०

अथायापवेति-त्वचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा ।

३ १ ३ १२ १२ ३२
अयापवापवस्वैनावसूनि

३ १ २ ३ १ २ ३ १ २
माꣳश्चत्वइन्दोसरसिप्रधन्व ।

३२ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूतिं

२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात् ॥ १ † ॥

हे सोम ! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" चर [ पवा—

* ऊ० गा० २१प्र० १ अ० १४ सा० ।

† ऋ० भा० ६, १, ५, ८ ( ९मं० ९७ सू० ) = ऋ० वे० ७, ४, २१, १ ।

पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति क्विप् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्दो!" त्वं "मांहत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्य्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "अश्नश्वित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेध-श्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्म्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत ; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेणः सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३  
उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २  
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ ३ १र २र  
षष्टिꣳसहस्रानैगुतोवसूनि

३ २उ ३ १ २ ३ १ २  
वृक्षन्नपक्वन्धूनवद्रणाय॥ २*॥

* ऋ० वे० ७, ४, २१, २।

हे सोम! "उत" अपिच "अवाय्यस्य" सर्वैः अवणीयस्य तव "सुते" प्रसिद्धे [यद्वा, षष्ठ्यर्थे चतुर्थी सुत-शब्दस्य] "तीर्थे" स्थाने "नः" अस्माकं स्वभूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" चर। "नैगुतः" नीचीनं गन्तवे* [न अध्यायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी] सोऽयं सोमः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३ १र
महीमे अस्यवृषनामशूषे

२र ३ १२ ३ १ २
माꣳश्चत्वेवापृशनेवावधत्रे।

१ २ ३ १ २ ३ २ ३ १ २ ३
अस्वापयन्निगुतःस्नेहयच्चापा

२ ३ २३ १ २ ३ २
मित्राꣳअपाचितोअचेतः॥ ३ † ॥ २१

"मही" महती प्रभूते "वृषनाम" [सुपां सुलुगिति (७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि०।

† ऋ० वे० ७, ४, २१, ४।

नम्, "इमे" एते हे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे*
भवतः ; ये च कर्मणी "मांश्चत्वे" [अश्वनामैतत् (निघ० १,१४,१८)]
अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा"
अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां
हिंसन-शीले भवतः । स ऽयं "निगुतः" नीचैः शब्दायमानान्
शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः । किञ्च
"स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून् । अथ प्रत्यक्षः । हे
सोम ! स त्वम् "अमित्रान्" शत्रून् "अपाचेत" अपगमय ।
तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः"
अस्मच्छकाशात् अपाचेत अपगमय [अच्चतिर्गतिकर्मा (स्था० प०)]
॥ ३ ॥ २१

२र १ २ १ २ १ र
॥ औष्टाद्यम् ॥ औहोवायि । अयोवायि । पवा

र र २१ २ ऽ २ १ २ ऽ १ र
वस्वैनावस्व२३नी । औ३वोयि । इहा । ई३या । मा॒

१ र २ १ २ ऽ २ ३ १ ऽ
श्चत्वइन्द्रोसरसिप्रधा२३न्वा । औ३वायि । इहा । ई३

२ र १ र २ १ २ ऽ २
या । मा॒श्चत्वइन्द्रोसरसिप्रधा२३न्वा । औ३वायि ।

---

* 'शूषे—स्वापयामः अथवा शूषे शोषणाय'—इति वि० ।

† 'मांश्चत्वे—मंहनीयत्वाय'—इति वि० ।

‡ 'अपाचितः—पतिता चेतसा भवन्ति'—इति वि० ।

इहा। ई३या। अग्निस्त्विद्यस्यवातोनजू२३तीम्। औ३होयि। इहा। ई३या। पुरुमेधाश्चित्तकवेनरा२३धात्। औ३होयि। इहा। ई२। या२३४। औहोवा ॥(१)

औहोहायि। उतोहायि। नएनापवयापवा२३स्वा। औ३होयि। इहा। ई३या। अधिश्रुतेश्रवायियस्यता२पयिर्थायि। औ३होयि। इहा। ई३या। पष्ठिᳲसहस्रानैगुतोवच्च२३ऽनी। औ३होयि। इहा। ई३या। वृत्तन्नपक्तन्धूनवद्रणा२३या। औ३होयि। इहा। ई२। या२३४औहोवा ॥(२) औहोहायि। मचोचायि। मेअस्यवृषनामशू२३षायि। औ३हायि। इहा। ई३या ३माᳲस्त्विवापृश्नेवावधा२३नायि। औ३हायि। इहा। ई३या। अस्वापयन्निगुतस्नेहया२३चा। औ ३ होयि।

२ १ ५ २ १ र र र र १ १ २
इहा। इ ३या। अपामित्राᳲअपाचितोअचा२३यिताः।
५ २ २ १ १ ३ १ र र
औ३होयि। इहा। इ२। या २ ३ ४। औहोवा।
२ १र ३ २
ए३। दौदिहो१(३) ॥ १७ * ॥ [१]

१र २र ३र २ १ ३ २
॥ इहवद्वासिष्ठम् ॥ औहोवाहा ३ होयि। इहा।
१र २ १ र १ ३ ४ ५ २र १ १
अयापवा। पवस्वै। नावसूना। माᳲस्वत्वआयि। दो
१ २ ३ ४ ५ २ १ २ १ र २ ३ ४
३सर। सिप्रधन्वा। ब्रध्नश्चिद्या। स्या३वा। तोनजू
५ २ १र २ १ २ २ · ४
तोम्। पुरुमेधाः। चित्तक। वा३४३यि। ना३रा५
२ १ २ १ २ ३ ४ ५ २
न्वा६५६त् ॥(१) उतनए। ना३पव। यापवस्वा। अ
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि। श्रवायि। यस्यतायिर्थायि। षष्टिᳲसहा।
२ १र २ ३ ४ ५ २ ३ १र २
स्ना३नैगु। तोवेसूनी। बृहन्नपा। कधून। वा३४३त्।
२ ४ २ १र र २ १ २ ३
रा३णा५या६५६ ॥(२) महीमेश्रा। स्या३वृष। नाम
४ ५ २र १ र २ १ र २ ३ ४ ५ २
श्रूषायि। माᳲस्वत्वेवा। पुष्पने। वावधत्रायि। अ

* ऊ० गा० ३प्र० १ख० १७सा०।

खापयात्। निगुतः। खेद्दयच्चा। औहोवाद्दा३द्दोयि।
इद्दा। अशमिचा। अपाचि। तो३४३। आ३चा
५यिता६५६ः(३) ॥ १० * ॥ [२]

॥ वात्त्वंतुरम् ॥ अयापवोवा पावस्वैना। वसूर३
नी। मा२स्वत्वइन्दोमरसि। प्रधा२३न्वा। ब्रधश्चिद्य
स्य। वा। तोनाजूर२३४तोम्। पुरु। मायि। धास्वि
त्ताका२३। वा२३यिता३। रा३४५धोई्द्दायि ॥(१) उत
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
य। स्यना२३यिर्थायि। षष्टिस्मद्दस्रानैं। गू। तोवा
सू२३४नी। वृत्ताम्। ना। पाकन्धूना२३। वा२३द्रा
३। णा३४५योई्द्दायि ॥(२) मद्दीमओवा। स्याद्रुषना।
मघूर२३षायि। सा२स्त्वेवापृ१नेवा। वधा२३त्रायि।

* ऋ० गा० ८प्र० २अ० १०गा०।

१ र २ १ २ १ २ ३ ५ १
अस्वापयन्निगुतः । स्ने । हायार३४चा । अपा । मा

२ १ १ ४ २
यि । चा०अपाचार३यि । तो२३आ३ । चा३४५यितो

५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमतृचे†, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र
अग्नेत्वन्नोअन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥
"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० २३प्र० २ख० १गा० ।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ छ० आ० ५, १, २, १ (२भा० ८९८ पृ० )=ऋ० वे० ४, १, १६, १ ।

अथ द्वितीया।

१ १ ३ १२ १२ ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादि-लक्षणं धनं "दाः" अस्मभ्यं देहि ‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभि-र्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समान-ख्यातिभ्यः पुत्रेभ्य § सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

---

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः,—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

॥ गूहम्॥ ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३। तार२३४माः। उतत्राताशिवोभुवा२३४५ः। शिवोभुवा२ ३ः। वरोवा। था५योहाायि॥(१) वाद्धः। अ। ग्ना यिर्वा२३सू। ऊम्मा२३। आ२३४वाः। अच्छानक्षिद्युम त्तमा२३४५ः। द्युमत्तमा२३ः। रयोवा। आ५यिन्दो ६हायि॥(२) तान्वा। शो। चायिष्ठा२३दी। ऊम्मा २३यि। दी२३४वाः। सुम्नायनूनमीमहा२३४५यि। न मीमहा२३यि। सखोवा। भा५योहाायि(३)॥१८*॥[१]

सत्रासाचीयम्॥ अग्ना३४यि। त्वन्नोअन्तमः। ओ ६वा। उतत्रा२ता। शा२यिवो। भुर२३वाः। वरो ३हो। वाहा३४३यि। या२३४योहाायि॥(१) वद्ध३४ः। अग्निर्वसुश्रवाः। ओ६वा। अच्छाना२च्छायि। द्यू२मा।

---

* क० गा० ३प्र० २ख० १८गा०।

२ १ ५ १र १र २ १ ५
तार२३माः । रयौ३हो । वाहा३४३यि । आर२३४यिन्दो
५ ३ २ र र ५ र
६हायि ॥(२) तन्वा३४ । शोचिष्टदीदिवः । ओ६वा ।
२ १र १ १ २ १ ५ १र
सुम्नाया२नू । ना२माथि । मार२३हायि । सखौ३हो ।
१र २
वाहा३४३यि६हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे†—

प्रथमा ।

३ १उ ९ १ २ ३१ २ ३ १२ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुता प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सीषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० २ख० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० । सामैतदूह्यगानस्य ।

‡ ऋ० शा० ५, २, २, ६ (१भा० ९०३पृ०)=ऋ० वे० ८, ८, १५, १ ।

अथ द्वितीया।

१ २ ३ १क २र ३ १ २ ३ १र २र ३ १ २
यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु॥

"सहसीषधातु"-"सहचीक्लृपानि"—इति पाठौ॥२॥

अथ तृतीया।

२ ३उ १ २ १ २ ३१ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत्॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु॥

"भेषजाकरत्"-"भूत्ववितातनूनाम्"—इति पाठौ॥३॥२३

---

* ऋ० वे० ८, ८, १४, २।

† ऋ० वे० ८, ८, १५, ३।

अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः! "वः" यूयम् "उप" समीपे "प्रार्च" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

॥ उद्वंशपुत्रम् ॥ प्रवाः। आयिन्द्रायवृत्रहान्तमा २३या। वायिप्रायगाथज्ञा२या३ता। याञ्जुजौवा३। उप्। षा॒ऽरतो॒ऽ३ऽ५हायि ॥(१) अर्चा। ताअर्कम्मह्

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, २, १० । १भा० ८९५पृ०)"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,२,१,९ ।१भा० ८९४पृ०)"—इत्यस्याः प्रतीकम् "अर्च"—इति, तथैव "उपप्रक्षे मधुमति क्षियन्तः (५, २, १, ८ । १भा० ८९३पृ०)"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप"—इति, ऊहगान-तृतीयप्रपाठकान्तिमसुद्वंश पुत्रसाम (१००पृ०) सामैवात्र बहुमान मन्यथा तस्य मूलभूत-ऋचस्त्वालाभ एव सर्वथा स्यात्। अन्यत्राप्यदर्शनात्।

† 'उद्वंशपुत्रोऽच्छावाकसाम। "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एवमृचस्त्रृचात्मिका-भाष्ये ज्ञातार्थः'—इति वि०।

ता:सुवार२३र्क्काः। आस्तोभतिश्रुतो१यू३वा। सश्रा३उ
वा३। उप्। आ॒ऽ२यिन्द्रो३५ह्रायि ॥(२) उपा। प्रा
च्चेमधुमतायिच्चिया २ ३ न्ताः। पूर्व्यं मरयिन्धा१इम्मा३ह्रा
यि। तञ्चा ३ उवा ३। उप्। आ॒ऽ २ यिन्द्रो ३ ५
ह्रायि(३) ॥ १८ * ॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः ‡ ॥ ७ ॥

---

* ऊ० गा० ३प्र० २ख० १८सा०।

† 'षष्ठमखः समाप्तः। इष्ट्रखकरूः समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिमलग्रन्थसम्मतञ्च।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

॥ अथाष्टमाध्याय आरभ्यते * ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो

३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्यः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोकजगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तौमिकश्चेदमहः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ छ० आ० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, १२, २ ।

भावने ( अदा० प० ) व्यत्ययेन विकरणस्य श्नुः ( ३, १, ३८ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महि-व्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः [ "राजाहः सखिभ्यष्टच् ( ५, ४, ८१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूय-माणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

२ ३     २ ३ १ २ ३ २उ ३
प्रहᳲसासस्तृपला*वग्नुमच्छा†

२उ ३ १ २
मादस्तंवृषगणाअयासुः।

३   २ ३   १ २   ३ १ २
अङ्गोषिण‡म्पवमानᳲसखायो

३ १ २ ३ १२ २२   ३ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम्¶ ॥ २ § ॥

---

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष्य"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च

} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।

"हंसासः" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तुपला" तुपलं [ सुपां सुलुगिति सोराकारादेशः ( ७, १, ३९ )। तुपल-शब्दः क्षिप्र-वाची, तदुक्तं यास्केन —"तुप्रप्रहारी क्षिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति ] क्षिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धर्षं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः ॥ २ ॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—सेक्तारः सङ्घाताः'—इति वि०।

‡ तुपला—लोक-वयस्य पालकाः'—इति वि०। "सोमो वैन्द्रो वा"—इति निरु० नै० ५, १२।

¶ 'वग्नुं—बलम्'—इति वि०।

§ 'अच्छ—आप्तुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाहे दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

अथ तृतीया।

१ २ ३ १ २ ३ १उ
सयोजत*उरुगायस्यजूतिं
३ १ २ ३ १र २र
वृथाक्रीडन्तम्मिमतेनगावः।
३ १ २ ३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो
१ २ ३ १ २ ३ १ २ ३ १ २
दिवाहरिर्ददृशेनक्तमृज्रः ॥ २ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः। किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

* "यरंहत"—इति ऋ० पाठः।

† ऋ० वे० ७, ४, ११, ३।

‡ 'उरुगायस्य—बहुविषस्य गानस्य'—इति वि०।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि०।

§ 'परीणसं—परि समन्तात् गावो नीयन्ते परीणसः, तम्'—इति वि०।

न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋजः" ऋजुगामी* विस्पष्टः प्रकाशयुक्तो दृश्यते† ॥ [ददृशे—दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

अथ चतुर्थी ।

२ १ २ ३ १ १ १ ३ १ २ ३ १ २ ३ १ २

प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः ।

१ २ ३ १ २

सोमासोरायेअक्रमुः ॥ ४‡ ॥

"स्वानासः" अभिषव-वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" अश्वुभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

अथ पञ्चमी ।

३ २ १ १ २ ३ १२ १२

हिन्वानासोरथाइवदधन्विरेगभस्त्योः ।

१ २ ३ १ २

भरासःकारिणामिव ॥ ५ § ॥

---

* 'ऋजुः—ऋ गतौ नक्रो भवति'—इति वि० ।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि० ।

‡ ऋ० वे० ९, ७, ३४ ।

¶ यूपस्य गर्ता उपरवा उच्यन्ते । तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"हविर्धानस्थानसोऽधः प्रभगं खनत्युपरवानध्यादि करोत्यवटवदिति ( ८, ४, २५ )" । यथा यूपस्यावटः क्रियते तथाश्वाणुपरवनामकांश्चतुरो गर्तानभिखीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः । § ऋ० वे० ९, ७, ३४ ।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते । तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी ।

१ २ ३ १र २र ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते ।
३ २उ ३ १ २ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होतृभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोर्विकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि० ।

† 'हिन्वानासः—पूयमानाः'—इति वि० ।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि० ।

¶ ऋ० वे० ९, ७, ३४ ।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः बध्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरज्यते; उदकैः क्षीरैर्वा'—इति वि० ।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि० ।

अथ सप्तमी ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १
परिस्वानासइन्दवोमदायबर्हणागिरा ।
१ २ ३ १ २
मधोअर्षन्तिधारया ॥ ७ * ॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्वानासः"-"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च ॥ ७ ॥

अथ अष्टमी ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आपानासोविवस्वतोजिन्वन्तउषसोभगम् ।
१ २ ३ १ २
सूराअण्वं वितन्वते ॥ ८ † ॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० वे० ९, ७, २४ ।
† ऋ० वे० ९, ७, २८ ।
‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि० ।

सोमाः "अपत्र वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

१ २ १ २   २ १ १ १ २   २ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।
१ २ १ २   २ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी।

२   १ २   २ १ २   ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।
२ १ २   २ २ ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अपत्र वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि०।

† ऋ० वे० ९, ७, २५।

‡ "हरसः"—इति तु ऋग्वेदीयपाठः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृताऽपि—'हरसे दीप्त्यै'—इति।

¶ ऋ० वे० ९, ७, २५।

"समीचीनासः" समीचीनाः* "जानयः" जाति-सहशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आशत" व्याप्नुवन्ति ॥

"आशत"-"आसत"—इति पाठौ, 'जानयः'-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

२ ३ १ २ ३ १ १ ३ १ २ ३ १ २ ३ १
नाभानाभिन्नआददे चक्षुषा सूर्य्यन्दृशे।
३ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्येसचा"—इति पाठौ ॥ ११ ॥

---

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जानयः—सप्त जनाः, वषट्कारिणः— होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ९, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहते दशापवित्रात् सोमम्'—इति वि०।

अथ द्वादशी।

२ १ २ २ १ २ ३ १ २ ३ २ ३ १ २ ३ २
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।
१ २ ३ १ २
सूरःपश्यतिचक्षसा ॥ १२ * ॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति" ॥

"प्रियम्"-"प्रिया"—इति पाठौ‡ ॥ १२ ॥

२ २ २ र १ २
॥ पार्थम् ॥ ओ३हो३होयि। प्रकावियाम्। उग्न
र १२४ ५ २र र १र १ १ १ ३४
ने। वब्रुवाणाः। देवोदेवा। ना३ज्ञनि। माविव
५ १ २ १ १२३४५ २र १
क्ती। मद्विव्रताः। प्रुचिव। धूःपवाकाः। पदावरा।
२ १ २ २ ४
हो३अभि। आ३४३यि। तो३रा५ यिभा ई ५ ईन् ॥ (१)
२ १र २१र १२३४५ २र १
प्रहःसासाः। तपला। वग्नमच्छा। अमादस्ताम्।
२१ १२३४५ २र १ २१र
वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नः

* ऋ० वे० ६, ७, ३५।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

सखायाः । दुर्मर्षंवा । णा३म्प्रव । दा३४३ । तो३सा पूकाई५६म् ॥(२) सयोजनायि । उरुगा । यस्यजूतीम् । वृथाक्रीडा । जा ३ म्निम । तेनगावाः । परीणसाम् । क्रणुते । तिग्मशृङ्गाः । ओ३हो३वोयि । दिवाहरा यिः । ददृशे । ना३४३ । क्ता३मा५र्त्रा६५६ः(३) ॥५*॥ [१]

॥ वाराहम ॥ हाउहाउ । ऊप । प्रकावियाम । उशने । वभ्रुवाणाः । देवोदेवा । ना३ञ्जनि । मा विवक्ती । महिव्रताः । शुचिबा३ । धूःपवाकाः । पदा वरा । हो ३ अभि । आ ३ ४ ३ यि । ती३रा५यिभा६ ४ ६न ॥(१) प्रहंसासाः । तृपला । वग्नुमच्छा । अ मादस्ताम् । वृषग । णाअयासूः । अक्तोषिणाम् । पवमा । नं सखायाः । दुर्मर्षंवा । णा३प्रव । दा

* ऊ० गा० ६प्र० २ख० ५गा० ।

२ ४ १ १र १ १
३४३ । तो३सा५का६५६म् ॥(२) सयोजतायि । उह्
र १ २ ३ ४ ५ १ १र र १ १ १ २
गा । यस्युजूतीम् । वृथाक्रीडा । ता३म्मिम । तेन
४ ५ २ १र २ १ र २ ३ ४ ५ २र
गाद्वाः । परीणसाम् । कृणुते । तिग्मशृङ्गाः । हाउ
र १ १ १र २१ र २ १
हाउ । ऊप् । दिवाह्नरायिः । दहग्नोना३४३ । क्ष्मा
४
३मा५र्ज्मो६५६:(३) ॥ १८ * ॥ [२]

२ र १ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रकावियाम् । उशनेवा । ब्रू
१र २र र १र २र १ १
२वाणाः । देवोदेवा । नाञ्जनिमा । वा२यिवक्तायि ।
२ १ २ १ १र १ र १
महिव्रताः । शुचिवन्धुः । पा२वाकाः । पदावरा ।
२र १ १र १ १ १र
होअभियायि । तो२रेभा३नाउ ॥(१) प्रहं९सासाः ।
२ १ र १ २ र १ २ १
तृपलावा । ग्म२मच्छा । अमादस्ताम् । वृषगणाः ।
१र २ र १ २ १ र १र
आ२यासूः । अङ्गोषिणाम् । पवमानाम् । सा२खा
२ १ २ १ १र २ १
याः । दुर्मर्षेवा । साम्प्रवदाः । तो२साका३माउ ॥(२)

* ऋ० मा० १६प्र० २ ख० १८सा० ।

२र १ २१र १र २र १र
सयोजतायि। उरुगाया। स्या२जूतीम्। वृथाक्रीडा।
१ १ १र २र १ २ १र
तम्मिमते। ना२गावाः। परीणसाम्। कृणुतेतायि।
१ २र १ ११र १ १
ग्मा२श्टगाः। दिवाचरायिः। दद्दशेना। क्ता२मृज्रा
११११
३१उ। वा२३४५ः(३)॥ ३ *॥[३]

२ ५ ३ १ ४ ५
॥ कुत्ससारथीयम्॥ द्यो४वा। उद्धवा३। द्योवा।
२१र २ १ २१र १ ३ ४ ५ १र१र १र २
प्रकावियाम्। उग्रने। वब्रुवाणाः। देवोदेवा। ना
१ २ ३ ४ ५ २ २ १ २ १ २ ३
३म्नानि। माविवक्री। मचिब्रताः। शुचिव। धूःप
४ ५ २१र २१ २ १ २ ३ ४ ५ १
वाकाः। पदावरा। द्यो३अभि। ऐतिरेभान्॥(१) प्र
१ १र १ २१ र २ ३ ४ ५ २१र २ १ २१
घऌसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष
२ ३ ४ ५ २१र २१ २१ र १ ३ ४
ग। णायश्रासूः। अक्षोषिणाम्। पवमा। नऌसखा
५ ११२१ २ १ २ ३ ४ ५ १
याः। दुर्मर्षवा। णा३प्रव। दन्तिसाकाम्॥(२) स
१ २ १ २१ र २ ३ ४ ५ ११र१र १ १
योजतायि। उरुगा। यस्त्रजूतीम्। वृथाक्रीडा। ता

---

* ऊ० गा० १२प्र० १ख० १सा०।

१ २ ३ ४ ५ २ १ २ १ १ १ १ २ २ २
इम्मिम। तेनगावाः। परीणसाम्। क्रणुते। तिग्म

४ ५ २ १ २ १ १ १ १ २ २ ३ ४ ५ २
भृष्टाः। दिवाहरायिः। ददृशे। नक्तमृज्राः। होऽ

५ २ २ ४ ५ ५
वा। उक्रवाइ। होवाइहाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे—

अस्यग्रमिति द्वादशर्चं† प्रथमं सूक्तम्;

तत्र, प्रथमा।

१ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ १ २
अस्यग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः।

३ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता-योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "असृग्रम्" हविर्द्धानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० २अ० ६सा०।

† 'द्वितीयो द्वादशर्चः'—इति वि० खण्डः-इति यावत्।

‡ ऋ० वे० ९, ७, १८।

अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १र २र
प्रधारामधोअग्रियोमहीरपोविगाहते।
३ १ २ ३ २ ३ १ २
हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हविरात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "विगाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपतन्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ २ ३ १र २र ३ १ २
प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।
२ ३ २ ३ १ २ ३ २
सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ६, ७, १८।

‡ ऋ० वे० ६, ७, १८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदग्रन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

"सद्म" यज्ञगृहं "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥

"वृषोअचिक्रदत्"—"वृषावचक्रदत्"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२ ३ १र   २र ३ २ ३ १ २ ३ १र २र
परियत्काव्याकविर्नृम्णापुनानोअर्षति ।

१र ३ १ २
स्वर्वाजीसिषासति ॥ ४ * ॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गे "वाजी" बलवान् अन्नवान्विन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति ॥

"पुनानः"--"वसानः"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

१ २   ३ २उ ३ २ ३ १ २
पवमानोअभिस्पृधोविशोराजेवसीदति ।

१ २ ३ १ २ ३ १ २
यदीमृण्वन्तिवेधसः ॥ ५ ¶ ॥

---

* ऋ० वे० ६, ७, २८ ।

† 'नृम्णा धनेन'—इति वि० ।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति'—इति वि० ।

¶ ऋ० वे० ६, ७, २९ ।

"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" क्षरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ १ २ ३ १ २ ३ १उ ३ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३ २
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्भृतः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या‖ "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "अव्यो"—इति ऋ०-पाठः।

¶ ऋ० वे० ९, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु प्रथममसाविह सीदति'—इति वि०।

‖ 'मती—बुद्ध्या ऋत्विग्यजमानानाम्'—इति वि०।

अथ सप्तमी ।

१ २ १र २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति ।

२ ३ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः क्रयणाभिषवादिभिः "रण"¶ रमते, "सः" यजमानः "वायुम्," "इन्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी ।

२ ३ १र २र ३ १ ३ १ २ ३ १ २
आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§ ।

३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ०-पाठः ।

† ऋ० वे० ६, ७, १९ ।

‡ धर्मभिरिति ऋग्वेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च ; विवरण-कृद्व्याख्यानन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति ।

¶ "रणाः" दीर्घान्तश्रुतिः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः ।

§ "मित्रावरुणाभगंमध्वः"—इति ऋ०-पाठः ।

‖ ऋ० वे० ६, ७, १९ ।

हे "पवमानाः !" "अराव्णः" अदानान् यजमानान् "अप घ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ८ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

सोमाअसृग्रमिति नवर्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ १ २

सोमाअसृग्रमिन्दवःसुताऋतस्यधारया।

१ २ ३ १ २

इन्द्रायमधुमत्तमाः ॥ १ ‡ ॥

"ऋतस्य" यज्ञार्थं "सुताः" अभिषुताः "मधुमत्तमाः" अतिशयेन माधुर्योपेताः "इन्दवः" सोमाः "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* 'स्वर्दृशः—स्वर्गस्य लोकस्य दर्शितारः'—इति वि० ।

† 'ऋतस्य—सत्यस्य यज्ञस्याम्नस्य वा'—इति वि० ।

‡ ऋ० वे० ६, ७, २८, १ ।

अथ द्वितीया ।

३ १र २र ३ १ २ ३ २उ ३ १ २
अभिविप्राअनूषतगावोवत्सन्नधेनवः ।
१ २ ३ १ २ ३ १ २
इन्द्रꣳसोमस्यपीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति । तत्र दृष्टान्तः— "धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिशब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ १ १ २ १ १ २ ३ १ २ ३ १ २ ३ २
मदच्युत्क्षेतिसादनेसिन्धोरूर्माविपश्चित् ।
१ २ ३ १र २र ३ २
सोमोगौरीअधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्य स्थाने "क्षेति" निवसति । एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मौ" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरी

* 'विप्राः—ऋत्विजः'—इति वि० ।

† ऋ० वे० ६, ७, ३८, २ ।

‡ ऋ० वे० ६, ७, ३८, ४ ।

अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) ] "श्रितः" निवसति ॥ ३ ॥

अथ चतुर्थी ।

३ १र २र ३ २ ३ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते ।
२ ३ २ ३ १ २ ३ १
सोमोयःसुक्रतुःकविः ॥ ४ ‡ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी ।

१र २र ३ २ ३ २ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः ।
२उ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "ईदूतौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः ।

† "योवारे"—इति ऋ०-पाठः ।

‡ ऋ० वे० ९, ७, २८, ३ ।

¶ '[illegible]—च लोकस्य'—इति वि० ।

§ "कलशेष्वा"—इति ऋ०.पाठः ।

‖ ऋ० वे० ९, ७, २८, ५ ।

“यः” सोमः “कलशेषु” कुम्भेषु आस्ते; यश्च “पवित्रे” पवित्रस्य “अन्तः” मध्ये “आ हितः” निहितः, “तं” त्वामंशभूतं सोमम् “इन्दुः” तदभिमानी सो देवः “परिषस्वजे” प्रविशति ॥ ५ ॥

अथ षष्ठी ।

१उ २ १ २ २ १र २र २ १ १
प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि ।
२ २ १ २ २ १ २
जिन्वन्कोशम्मधुश्चुतम् ॥ ६ * ॥

“इन्दुः” सोमः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांस्त्वं “मधुश्चुतं” मधुनस्स्रावकं द्रोण-कलशं “जिन्वन्” प्रीणयन् पूरयन्नित्यर्थः । समुद्रस्यान्तरिक्षस्य “अधिविष्टपि” विष्टब्धे स्थाने “वाचं” “प्रेष्यति” प्रेरयति ; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी ।

१ २ २ २ २ १ १ २ २ २ १ २ २ १ २
नित्यस्तोत्रोवनस्पतिर्द्धीनामन्तःसबर्दुघाम् ।
२ १र २र २ २
हिन्वानोमानुषायुजा ॥ ७ † ॥

“नित्यस्तोत्रः” सन्ततस्तोत्रः “वनस्पतिः” वनानां स्वामी, सोमः “मानुषा” मानुषाणि “युजा” युग्मानि‡ अहीनैकाहा-

* ऋ० वे० ६, ७, १८, ६ ।

† ऋ० वे० ६, ७, १९, १ ।

‡ “युजा—योगेन”—इति वि० ।

अकानि* "हिन्वानः" प्रीणयन् "सबर्दुधाम्" अमृतसदृशाति-प्रियवचनानि दोग्ध्रीम्† "अक्तः" स्तोतृणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ त्वयालिवि ति शेषः ॥

"धेनामन्तस्सबर्दुघाम्"-"धीनामन्तस्सबर्दुघस्सः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

१ २ २ २ २ १ २
आपवमानधारयरयिꣳसहस्रवर्चसम् ।
२ १ १ २ १ २
अस्मेइन्दोस्वाभुवम् ॥ ८ ¶ ॥

हे "पवमान" पूयमान ! पुनान ! वा "इन्दो" सोम ! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः ॥ ८ ॥

अथ नवमी ।

२ १ २१ १२ २१उ ३१र २र ३१
अभिप्रियादिवःकविर्विप्रःसधारयासुतः ।
१ २ २ १ २
सोमोहिन्वेपरावति ॥ ९ § ॥ ४

---

* दिनैकसम्पाद्यमेकाहम्, द्वादशदिनातिरिक्तसम्पाद्यं सत्रम्, चायीनमन्यत् यागकर्म ।

† 'सबर्दुघां—सुखदोघ्रीं'—इति वि० ।

‡ 'धेनां—धेनूनाम्'—इति वि० । "धेना"—इति निघण्टौ वाङ्नामसु जनः-पञ्चारिंशत्तमं पदम् ( १, ११ ) ।

¶ ऋ० व० ६, ७, २९, १ ।

§ ऋ० वे० ६, ७, २९, २ ।

"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "सधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च,"सुतः"-"कविः"—इति च ॥९॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ उत्तेशुष्मासइति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
उत्तेशुष्मासईरतेसिन्धोरूर्मेंरिवस्वनः।

३ १ २ ३ २
वाणस्यचोदयापविम्॥ १ *॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

* ऋ० वे० ७, १, ७, १।

यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विसृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [शब्द-नामैतत् (निघ० १, ११)] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः ॥ १ ॥

अथ द्वितीया ।

३ १ ३ १ २ २ १र २र ३ १ २
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः ।
१उ ३ २ ३ १ २
यदव्यएषिसानवि ॥ २ ‡ ॥

हे सोम ! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति । कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि ॥ २ ॥

अथ तृतीया ।

१ २ १ ३ १ २ ३ १र २र ३ १ २
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः ।
१ २ ३ १ २
पवमानम्मधुश्चुतम् ॥ ३ ¶ ॥

---

* 'सिन्धोरूर्मैरिव—अपामिव सङ्घातः, यादृक् तेषां स्वनः'—इति वि० ।

† 'वाणस्य—वीणाविशेषस्य'—इति वि० ।

‡ ऋ० वे० ७, १, ७, २ ।

¶ ऋ० वे० ७, १, ७, ३ ।

"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य श्रावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २ २ ३ २ १ २
आपवस्वमदिन्तमपवित्रन्धारयाकवे ।
३ २ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

१ २ ३ १ २ ३ १ ३ ' १ २
सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।
१ २ ३ १ २
एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

* ऋ० वे० ६, ८, १५, ६ ।

† 'अर्कोऽद्रोणकलशः अथवा अर्क आदित्यः अथवा आदित्यरश्मयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।

हे "मदिन्तम" मादयितृतम। सोम! "ऋतुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोविकारैः पयोभिः "अज्यमानः" अज्यमानः संस्क्रियमानः स त्वं "पवस्व" क्षरस्व। "अनन्तरम्" "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "एन्द्रस्यजठरं-विश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमे-खण्डे—

अयावीतीति द्वचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १ ३ १र २र ३ १ २ ३ १ ३ २
अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।

३ १ २ ३ १र २
अवाहन्नवतीर्नव॥ १ *॥

हे "इन्दो" सोम! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिक्षर। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्रउक्तसङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* ऋ० मा० ६, १, १, ८ (१भा० ५१३०)=ऋ० वे० ७, १, १६, १।

'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम्।
१ ३ २ ३ २ ३ १ २
अध त्यन्तुर्वशं यदुम् ॥ २ * ॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोमरसः अवाहन्। "इत्था धिये" सत्य-कर्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन्। [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुपचर्यते ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १२ १२ ३ १ २
परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्।
१ २ ३ २ ३ १ २
क्षरा सहस्रिणीरिषः ॥ ३ ¶ ॥ ६

हे सोम! "अश्वविद्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

* ऋ० वे० ७, १, १८, २।

† 'सद्यः—क्षणादेव'—इति वि०।

‡ 'इत्था—इदानीम्'—इति वि०।

¶ ऋ० वे० ७, १, १८, ३।

धनच "परि चर"। अपिच "सहस्रिणीः" बहूनि* "इषः" अन्नानि चर॥

"परिमः"-"परिणः"—इति पाठौ॥ ३॥ ¶

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

३ १२ ३२उ ३२ ३ १२
अपघ्नन्पवतेमृधोपसोमोअराव्णः।
२ ३ १ २ ३२
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्णः" सक्तौ सत्यां धनानामदातृंश्च "अप" घ्नन् "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २३ १२ २र३१२ ३ १र २र
महोनोरायआभरपवमानजहीमृधः।
१ २ ३ २३१२
रास्वेन्दोवीरवद्यशः॥ २ §॥

---

* 'सहस्रिणीः—सहस्रसम्मिता इषः अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० म० पु० पाठः।

‡ ऋ० आ० ६, १, ५, १४ (२भा० १९४० )=ऋ० वे० ७, १, २१५।

¶ अपेत्युपसर्गे इषदर्शनात् घ्नन्नित्यस्याहृतिः।

§ ऋ० वे० ७, १, १३, १।

.हे "पवमान!" "इन्दो" सोम! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया।

१ २ ३१२१उ २ २ २ १ २३ १ २
नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन्।
१ २ ३ १ २ ३ १ २
यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यत्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीयसूक्ते—

प्रथमा।

२ १ २ ३ १ २३ २ ३२३ १ २
अयापवस्वधारयाययासूर्यमरोचयः।
३ १२ १२ ३ २
हिन्वानोमानुषीरपः ॥ १ ‖ ॥

---

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यच इति (६,३,१३५) तत्र दीर्घः।

† ऋ० वे० ७, १, २३, २।

‡ 'राधः—धनस्य'—इति वि०।

¶ 'ह्रुतः—कुटिलगामिनः'—इति वि०।

§ 'मखस्यसे—यज्ञमयं यज्ञं त्वं यदा करोषि'—इति वि०।

‖ छ० आ० ६, १, १, ७ (२भा० ५०४०)=ऋ० वे० ७, १, २१, २।

हे सोम ! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

१ २ ३ २३१ १ २३ १ २ ३ १र २र
अयुक्तसूरएतशम्पवमानोमनावधि।
३ १ २ ३ १ १
अन्तरिक्षेणयातवे ॥ २ * ॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्यइत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् (निघ० १, १४, १०)] अश्वं "अयुक्त" युङ्क्ते ॥ २ ॥

अथ तृतीया।

३ १उ ३ २ ३ २३१ २ ३ १ २
उतत्याहरितोरथेसूरोअयुक्तयातवे।
२३ २ ३ १ २ ३ २
इन्दुरिन्द्रइतिब्रुवन् † ॥ ३ ‡ ॥ ८

"उत" अपि च "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

---

* ऋ० वे० ७, १, ३१, १।

† "ब्रूवन्"—इति ऋ० पु० पाठः।

‡ ऋ० वे० ७, १, १, १, ४।

तान् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति* ॥

"रथे"-"दश"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठे खण्डे‡—

अग्निंवइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३
अग्निंवोदेवमग्निभिःसजोषा

१ २ ३ १ २ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम् ।

१२ २ ३ १ २ ३ १ २
योमर्त्येषुनिध्रुविर्ऋतावा

१ २ ३ १ २ ३ २
तपूर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य चाह्वानं क्रियते तदा सूर्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि० ।

† 'उक्तं बहिष्पवमानम्'—इति वि० ।

‡ 'इदानीमाज्यानि'—इति वि० ।

¶ य० वे० १५, ६९=ऋ० वे० ५, २, ३, १ ।

हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत । कीदृशम्? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् [ द्वितीयार्थे प्रथमा ( ३, १, ८५ ) ] "यजिष्ठं" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्तेषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति । कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया ।

२ ३२३ १२ २२ ३ २
प्रोथदश्वोनयवसेविष्यन्

३ २ ३ २ ३ १ १ २ ३ १ २
यदामहःसंवरणाद्व्यस्थात् ।

१ २ ३ २ ३ १ १ ३ १२
आदस्यवातोअनुवातिशोचि

१ २२ ३ १ २ ३ १ २
रधस्मतेव्रजनङ्कृष्णमस्ति ॥ २ ‡ ॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

* 'यजिष्ठं'—यजनीयम्'—इति वि० ।

† 'तपुः—तापनशीलः, मूर्द्धा—प्रधानभूतः'—इति वि० ।

‡ ऋ० वे० ५, २, ३, २ ।

¶ 'यवसे—सन्निधानभूते । अथवा द्वितीयार्थे सप्तमी । यवसमविष्यन् भक्षयन्'—इति वि० ।

ष्यात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृक्षेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्चिः "अनु वातः वाति" । अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने !, "ते" तव "व्रजनं" वर्त्म "कृष्णमस्ति" । "स्म"— इति पूरणम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १ २ ३ १उ
उद्यस्यतेनवजातस्यवृष्णो-

३ १ २ ३ १ २ ३ २
ग्नेचरन्त्यजराइधानाः ।

२ ३ १ २ ३ २ ३ १ २ ३
अच्छाद्यामरुषोधूमएषि

२ ३ १ २ ३ १ २ ३ २ ३ १
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ९

हे "अग्ने !" "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा-रहिता ज्वाला "इधानाः" इध्यमाना या "उच्चरन्ति" उत्क्रान्ति । हे "अग्ने !" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्याम्-अच्छ"† द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्र-त्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, [ यद्वा, हे

* ऋ० वे० ५, २, ३, ३ ।

† 'अच्छ—आप्तुम्'—इति वि० । संहितायाम् "अच्छा"—इति दीर्घान्त श्रूयते, तत्र निपातस्य चेति दीर्घः ।

अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुष-व्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ ९

अथ तमिन्द्रमिति त्र्यृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा ।

१२ २२ ३ २ ३ १ २ ३ १ २

तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।

१ २२ ३ १ २

सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्र" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति ( ३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

---

* 'मैत्रावरुणसामाख्यम्'—इति वि० ।

† ऊ० आ० १, १, ३, ५ ( १भा०.२९९पृ० )=ऋ० वे० ८, ६, १९, १ ।

अथ द्वितीया।

१ २ १र २र ३ १र १र ३ १र ३र १ २
इन्द्रःसदामनेकृतओजिष्ठःसबलेहितः।
३ २ ३ २उ ३ २
द्युम्नीश्लोकीससोम्यः॥ २ *॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्केनोक्तत्वात् ] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡॥

"बले"-"मदे"—इति पाठौ॥ २॥

अथ तृतीया।

३ २उ ३ १र २र ३ १ २ ३ १ २
गिरावज्रोनसम्भृतःसबलोअनपच्युतः।
३ १ ३ १र २र
ववक्षउग्रोअस्तृतः॥ ३ ¶॥ १०

* ऋ० वे० ६, ६, २२, ३।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽतिशयो गीयते सः श्लोकी'—इति वि०।

‡ 'सोमैर्यः सम्भाव्यते स सोम्यः'—इति वि०। "सोममर्हति यः"—इति पा० ४, ४, १३७।

¶ ऋ० वे० ६, ६, २२, ४।

"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रेन" वज्र आयुधं तत्कर्त्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्मात् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति ॥

"उग्रः"-"ऋष्वः"—इति पाठौ ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः* ॥ ६ ॥

---

अथ सप्तम-खण्डे †—

अध्वर्योअद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्, ‡

तत्र प्रथमा¶ ॥

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
अध्वर्योअद्रिभिःसुतꣳसोमम्पवित्रआनय।

३ १ २ ३ १ २
पुनाहीन्द्रायपातवे ॥ १ ¶ ॥

---

* 'इन्द्र अग्नाममोहृदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोज्यमानीति तदभिप्रायः। [illegible] तदिहैव द्वितीये( ९,१, ९,१ = ३भा० ३११पृ० )प्रपाठके।

† 'उक्तान्याख्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'गायत्रप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ छ० आ० ६, १, २, ३ ( २भा० ५७पृ० )=ऋ० दे० ७, १, ८, १।

हे "अध्वर्यो !" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एवदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय ॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि"-"पुनीहि"—इति च ॥ १ ॥

अथ द्वितीया।

१२ १ २ ३ १ २ ३ २उ ३क २र

तवत्यइन्दोअन्धसोदेवामधोर्व्याशत।

१२ ३ १ २

पवमानस्यमरुतः ॥ २ * ॥

हे "इन्दो" सोम ! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी ( ३, १, २५ )] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च"† एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः ॥

"व्याशत"-व्यश्नुत"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ १ ३ १ २ ३१उ ३ १ २ ३ १ २

दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।

३ २ ३ १ २

सुनोतामधुमत्तमम् ॥ ३ ‡ ॥ ११

---

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।

हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्य्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥११

॥ वैरूपम्† ॥ अध्वर्य्यो२३४आ । द्रिभायिःसू३ता३म् । सोमांपा२३४वो । त्रा आ१नाया२ । पुना२३ । होन्द्रा३४औहोवा । यपात्तवे२३४५ ॥(१) तवत्या१२३४ई । दो आन्धा३सा३ः । देवा२मा२३४धोः । वाया१ष्माता२ । पवा२३ । माना३४औहोवा । स्यमरुता२३४५ः ॥(२) दिवःपी२३४यू । षमुत्ता३मा३म् । सोमा२मा२३४ई न्द्रा । यावज्रायिणा२यि । सुनो२३ । तामा३४औहोवा । धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता"—इत्याकारान्तं श्रूयते, तत्र द्व्यचोतस्तिङ इत्यनेन दीर्घः, (६, ३, १३५) योगविभागाद्दीर्घः ।

† "गायत्री वैरूपम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ४प्र० १ख० २०सा० ।

॥ आप्तुभार्गवम्॥ अध्वर्य्योअद्रि। भिःसू३ताम्। सोमम्पवा३यि। त्राआ२ना२३४या। पुनाह्वा१यिन्द्रा२। यपा३। ता२३४वो६हायि॥(१) तवत्यइन्दो। अन्धा३सः। दायिवामधो३ः। वाया२म्रा२३४ता। पवामा१ना२। स्यमा३। रु२३४तो६हायि॥(२) दिवःपीयूषम्। उत्ता३माम्। सोममिन्द्रा३। यावा२आ२३४यिणायि। सुनोता१मा२। धुमा३। ता२३४मो६हायि(३)॥ १ *॥ [२]

॥ मार्गीयवम्† ॥ अध्वौहोवा। य्योंआ२। द्रिभायिःसू२३४ताम्। सोमम्पवि। त्राआना१या२। पुना। हा। औ३होयि। हो२३४न्द्रा। या२पा२३४औहोवा। ए३। तवे२३४५॥(१) तवौहोवा। त्याआ२यि। दो

* क० गा० ४प्र० २ख० १सा०।

† "मार्गीयवायम्"—इति ख० पु० पाठः।

२ ३ ५ १२२ १ २ १ २ १ २
अन्धा२३४सः । देवामधोः । वियाशा१ता२ । पवा ।

२ २ ३ ५ १ ३ ५२ २
हा । औ३होयि । मा२३४ना । स्वा२मा२३४औहो

२ १ १११ ५२ १ २ १
वा । ए३ । हुता२३४५ः ॥(२) दिवौहोवा । पीयू२ ।

३ २ ३ ५ १२ ५२ १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्रा१यिणा२यि ।

१२ २ २ ३ ५ १ २
सुनो । हा । औ३होयि । ता२३४मा । धू२मा२३४

५२ २ २ १ ११११
औहोवा । ए३तमा२३४५म् (३) ॥ २ * ॥ [३]

२ २ २ १२
॥ सौमित्रम् ॥ अध्वर्यो अद्रिभिः सुता३मे । सोम

२ २ २ १ २ २
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । होन्द्रा

१ ४ ५ ४ ५ २ २
२ओ२३ । यपोवा । ता५ा६हायि ॥(१) नवत्यइन्दो

१ १२२ २ २ २
अन्धसा३ए । देवामधोर्वि । आ२१२३ । प्राता ३ ४ ३ ।

१ २ २ १ ४ ५ ४ ५
पा२३वा । माना२ओ२३ । स्यसोवा । हु५ तो ६ हा

२ २ २ १ १२ १ २
यि ॥(२) दिवःपीयूषमुत्तमा३मे । सोममिन्द्राय । वा

* ऊ० गा० ४प्र० १ख० २सा० ।

२१२३ । जिणा३४३यि । सू२३नो । तामा२ओ२३ ।
धुमोवा । ता५मो६हायि(३) ॥ ३ * ॥ [४]

॥ ऐटतम् ॥ अध्व । एआध्वा । र्योअद्रि । भा३
यिः । द्रा२यिभा२३४औहोवा । मू२३४ताम् । सोमा
मा२३४वी । चआ३ । चा२आ२३४ओहोवा । ना२३
४या । पुनाहा२३४यिन्द्रा । यपा३ । या२पा२३४औ
होवा । तौ२३४वे ॥ (१) तव । एतावा । त्यइन्दो । आ३ ।
दो२आ२३४औहोवा । धा२३४माः । देवामा२३४धोः ।
विया३ । वा२या२३४औहोवा । शा२३४ता । पवामा
२३४ना । स्यमा३ । स्या२मा२३४औहोवा । रू२३४
ताः ॥(२) दिवः । एदायिवाः । पीयूषम् । ऊ३ । पा
२मू२३४औहोवा । ता२३४माम् । सोमामा२३४यिन्द्रा ।

* ऊ० गा० ४प्र० २ख० ३सा० ।

यवा३। या२वा२३४औहोवा। ऊो२३४णो। सुनोता २३४मा। धुमा३। धू२मा२३४औहोवा। ता२३४ माम्(३) ॥ ४ * ॥ [५]

॥ धुरासाकमश्वम् ॥ अध्वर्य्योआ३। हौ३हो३१। द्रिभिःसुता३म्। हौ३हो३१यि। सोमम्पवा३यि। हौ३हो३१। आनया३। हौ३हो३१यि। पुनाहीन्द्रा३। हौ३हो३१। यपातवा३यि। हौ३हो३१२३४५ई। डा ॥(१) तवत्यआ३। हौ३हो३१। दोअन्धसा३ः। हौ३हो३१यि। देवामधो३ः। हौ३हो३१यि। वियाशता३। हौ३हो३१यि। पवमाना३। हौ३हो३१। स्यमरुता:३। हौ३हो३१२३४५ई। डा ॥(२) दिवःपीयू३। हौ३हो३१। षमुत्तमा३म्। हौ३हो३१यि। सोममिन्द्रा३।

* ऊ० गा० ४प्र० २अ० ४गा० ।

औ३हो३१ । यवञ्चिणा३यि । औ३हो३१यि । सुनोतामा
३ । हौ३हो३१ । धुमत्तमा३म् । औ३हो३१२३४५ई ।
डा(३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्यो अद्रिभिः सुतम् । ईय
इयाहायि । सोमम्पवित्रआ । हा३हा३यि । ना२३४
या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा
तवे२३४५ ॥(१) तवत्यइन्दोअन्धसः । ईयईयाहायि ।
देवामधोर्विया । हा३हा३यि । आ२३४ता । पावा३
उवा३ । मा२ना२३४औहोवा । स्यमरुता२३४५ः ॥(२)
दिवःपीयूषमुत्तमम् । ईयइयाहायि । सोममिन्द्रायवा ।
हा३हा३ । ज्रा२३४यिणायि । सूना३उवा३ । ता२मा
२३४औहोवा । धमत्तमा२३४५म् (३) ॥ ६ † ॥ [७]

---

* ऊ० गा० ४प्र० २ख० ५सा० ।

† ऊ० गा० ४प्र० २ख० ६सा० ।

२ १ २ १ २ ३
॥ सौपर्णम्* ॥ अध्वर्य्य्ओवा। द्रायिभायिःसू२३४
५ २र १ २१ ७ ३ ५ १ १
ताम्। सोमाम्यवायि। चआ२ना२३४या। पू२ना।
२ १ २र १ २ ४ ५ २
ह्वा२३यिन्द्रा। यापातवा। औ३होवा ॥(१) तवत्य
१ २ १ २ ३ ५ २र १ २ १ ७ ३
ओवा। दो अन्धा२३४सा:। देवामधाः। विया२शा
५ १ १ २ १ २ १ २
२३४ता। पा२वा। मा२३ना। स्यामरुता। औ३
४ ५ २ र १ २ १ २ ३ ६ १र
होवा ॥(२) दिवःपीयोवा। षामुत्ता२३४माम्। सो
१ २ १ ७ ३ ५ १ १
मामिन्द्रा। यवा२आ२३४यिणायि। मू२नो। ता२३
२ १ १ १ ४ ५ ४
मा। धूमत्तमाम्। औ२३होवा। हो ५ ई। डा(३)

॥ १२ † ॥ [८]

१ २र १ २ १ २
॥ रोहितकुलीयोत्तरम् ॥ अध्वर्य्याअद्रिभायिः। सु
१र २ १र २ १ १
ता२म्। सोमम्यावि चआना२३या। पूना२ह्वायिन्द्रा२१।
२ १ ५ ४ ५ १ २ १ १र १
यपो २ ३ ४ वा। तापूवोइह्वायि ॥(१) तवत्यइन्दोआ।

---

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऊ० गा० १६प्र० २ख० १३गा०।

२ १२ २ २ ३१२ २ १ १
धसा २ः। देवामधोर्वियाशा२३ता। पावा २माना२३॥

२ १ ५ ४ ५ २१ २२ १२ २ १ १ २
स्यमो२३४वा। हु५तो६हायि॥(२) दिवःपीयूषम्। त

१२ २ २ १ २ १ १
मा २म्। सोममिन्द्रायवज्रा२३यिणायि। सूनो २तामा

२ १ ५ ४ ५
२३। धुमो२३४वा। ता५मो६हायि(३)॥ १४ *॥ [९] ११

धर्त्तादिवइति तृचात्मकं द्वितीयं सूक्तम्†

तत्र प्रथमा।

३ २ ३ २ ३ २ ३ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः।

१ १ २ १उ ३ १२ ३२ ३
हरिःसृजानोअत्योनसत्वभि

२ ३ १ २ ३ २
र्वृथापाजांसिकृणुषेनदीष्वा॥ १ ‡॥

---

* ऊ० गा० १६प्र० १खा० १४सा०।

† 'अभिसोमासआयवइति बृहत्यः, धर्त्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि०। यथा पूर्वमभिसोमासइति (२, १, ९, १=३भा० ४०१पृ०) तथैवात्र धर्त्तादिवइति भावः।

‡ ऋ० सा० ६, २, २, ५ (२भा० १८१पृ०)=ऋ० सं० ७, २, १, १।

"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्व्यः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्व इव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः ॥

"कृणुषे"-"कृणुते"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २ ३
शूरोनधत्तआयुधागभस्त्योः

२ १ १ ३ १र २र
स्वाऽ३ःसिषासन्नथिरोगविष्टिषु।

१ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रस्यशुष्ममीरयन्नपस्युभि

१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानोअज्यतेमनीषिभिः ॥ २ * ॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

---

* ऋ० वे० ७, ३, १, २।

"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथा-दिन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमा-नोद्दिष्ट गो-सम्भजनाय रथवानित्यर्थः । "इन्द्रस्य" "शुष्मं" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २
इन्द्रस्यसोमपवमानऊर्मिणा

३ १ २ ३ १ ३ १ २
तविष्यमाणोजठरेष्वाविश ।

१ २ ३ २ ३ २ ३ १ २
प्रनःपिन्वविद्युदभ्रेवरोदसी

३ २ ३ २ ३ १ २ ३ १ २
धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम !" "पवमान" पूयमान ! त्वं "तविष्यमाणो" वर्द्धि-ष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्मिणा" प्रभूतया

---

* 'असि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति स्रुक्-स्रुव-ग्रह-चमसान्यायुधानि गमस्तोः'—इति वि० ।

† 'अपस्युभिः—अपइच्छद्भिः ऋत्विग्भिः'—इति वि० ।

‡ 'अज्यते—अज क्षेपणे, क्षिप्यते'—इति वि० ।

¶ ऋ० वे० ७, ६. १, ३ ।

§ 'तविष्यमाणः—सूयमानः'—इति वि० ।

धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुक्ष "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [ बहुनामैतत् ( निघ० ३, १, ५ ) ] बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥३॥१२

२ र १     २ १
॥ उदङ्गार्गवम् ॥ धर्त्तादायिवा२३ः। पवतायिका

२र १र     १ र १     २र १
२३। त्वीयोरसाः। दक्षोदायिवा२३। नामनूमा२३।

२र १र     २ १     २र १
दीयोनूभायिः। हरिःसाज्जा२३। नोअतायियो२३।

२र १     २ र १     २ १     २र
नासत्वभायिः। वृथापाजा२३। सिक्रणूषा२३यि। ना

र २     २र र १     १ र १     २र
दीषुवा३१उ ॥(१) शूरोनाधा२३। तंआयूधा२३। गा

१     २ १     २ १     २र १
भस्तियोः। सुवःसायिषा२३। सन्नथायिरा२३। गाविष्टि

---

* 'जठरेषु आविश'—सप्तम्या बहुवचनमिहैकवचनस्य स्थाने द्रष्टव्यम्।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विद्युदभ्रे यथा अभ्राणीव रोदसी द्यावापृथिवी व्यापूय'—इति वि०।

‡ धिया—बुद्ध्या—इति वि०। "धी."—इति निघण्टौ कर्मनामस्वेकविंशति-तमं पदम (२, १)।

२ १ २ र १ ३र १
षू। इन्द्रस्याशू२३। अमीरायार३न्। आपस्तुभायिः।
२ १ २र १ २र १र
इन्दुर्द्धायिन्वा२३। नोअज्यातार३यि। मानीषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रस्यासो२३। मपवामार३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। णोजठारार३यि। षूआविशा। प्रनः
१ २ १ २र १र २ र १
पायिन्वा२३। विद्युदाभ्रे२३। वारोदसायि। धियानो
२र १ २र १ २ १ १ १ १
वा२३। जाᳶउपामा२३। ह्वौश्रस्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ कावम् † ॥ धर्त्तावा। दिवःपवतेका। त्वियोरा
१ र र र र २ र १ १
सा२ः। दच्चोदेवानामनुमा। दियोऽन्हभा२यिः। चरिः
र र २ १ १ २ ४ ५
स्रजानोअतियो। नसत्वाभार३यिः। वार्था ३ पाजा।
२ १ १ २ ४ २र १
सिङ्खणूषा२३यि। नादा३यिषूवा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तआयुधा। गभस्तायो२ः। स्वःसिषास्त्रथिरो।

* ऊ० गा० ४प्र० २ख० १४सा० । "स्वारकावम्"—इति क० पु० पाठः ।

गविष्टायिषू३। इन्द्रस्यप्रुआमीरयान्। अपयूमा२३यिः। आयिन्द्र३र्शायिन्वा। मोभ्ज्यामा२३यि। मामा३यिषा पूयिमा६५६यिः॥(२) इन्द्रोवा। स्यसोमपवमा। नऊ र्मायिणा२। तविष्यमाणोजठरायि। पुष्नावायिष्वा२। प्रनःपिन्वविद्युदभ्रे। वरोदासा२३यि। धाया३नोवा। जा६उपामा२३। हीआ३स्वा५ताई५६ः(३)॥१६ * ॥[२]

॥यज्ञायज्ञीयम्॥ धर्त्ता५दि। वा३ःपा३वतेका। व्योयोरसोदक्षोदेवानामनुमा। दो३योनृ३भायिः। हरा३यिःसृजानोअत्योमत्व। भिर्वा२३र्था। ऊमायि। पा३जा। सायिकृणुषेनदा२यिष्वाउ॥(१) आमू। रो नधत्तआयुधागभस्त्योःस्वःसिषासन्रयिरो। गा३वायिष्टा३यिषू। इन्द्रा२स्यप्रुआमीरयन्नपस्यु। भिरा२३यिन्दः।

* ऋ० मा० ६म० १ष० १६मा०।

ऊम्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ ॥(२)

भायिरायि। द्रस्यसोमपवमानऊर्म्मिणातविष्यमाणोजठरा

यि। षू३आवा३यिश्रा। प्रना२:पिन्वविद्युदभ्रेवरोद्द।

सोधार२३या। ऊम्मायि। नो३वा। जा६उपमाहिश्रार

स्वताउ। वा३४५(३)॥ १५ * ॥ [३]

॥ स्राक्करम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते

क्तवियोरसा। एहिया। एहिया३४। हाउदाक्षाः।

दा२३४यि। वानामनुमादियोनृभिः। एहिया। एहि

या३४। हाउहारीः। सा२३४। जानोअत्योनसत्व

भिः। एहिया। एहिया३४। हाउवार्था। पा२३४।

जा६सिक्तणुषेनदीषुवा। एहिया। एहिया३४। हाउ ॥(१)

हाउप्रुरा:। ना२३४। धक्तआयुधांगभस्त्योः। एहि

* ऊ० गा० १५प्र० १ख० १५सा०। † "स्रार्गम्"—इति ख० पु० पाठः।

२ १ २ २ १ २ १ २र
या। एहियाइ४। हाउस्त्वाः। सा२३४यि। षास
र १ २ १ १ २ १ २ १ २
नुथिरोगविष्टिषु। एहिया। एहिया३४। हावायिन्द्रा।
१ २ र १ २ १ १ २ १
स्या२३४। मुष्मामीरयन्नपस्युभिः। एहिया। एहिया
१ २ १ २र र र र
३४। हावायिन्दूः। हा२३४यि। न्वानोअज्यतेमनी
१ २ २ १ ३२ ५ १
षिभिः। एहिया। एहिया३४। हाउ॥(२) हावायि
२ १ २र र र र १ ३ २
न्द्रा। स्या२३४। सोमपवमानऊर्म्मिणा। एहिया।
१ ३२ १ २ १ २र र र र
एहिया३४। हाउतावायि। ष्या२३४। माणोजठरेषा
१ ३ २ १ ३ २ १ २ १
विश। एहिया। एहिया३४। हाउप्राना:। पा२३४
२ र र र १ ३२ १ २ २
यि। न्वविद्युदभ्रेमवरोदसो। एहिया। एहिया३४।
१ २ १ २र र र १ ३
हाउधाया। नोर३४। वाजाᳬउपमाहिशश्वतः। एहि
२ १ २ २ ५ ४
या। एहिया३४। हाउ। वो५ई। डा(३)॥ २०*॥ [४]
३ २ ३ २ ३र ४र ५ १
॥ वासिष्ठम्† ॥ ऊऊवायि। धर्त्ता३४औहोवा। दि

* ऋ० ग्रा० १७प्र० १ख० २०सा०।

† "ऊऊवायि वासिष्ठम्"—इति ख० पु० पाठः।

२ १ ९ १ २ ४ र ५ ३ २ ३ र ४ र ५ १ र
वाः। पवते। क्रत्वियोरसाः। दत्ता३४औहोवा। दे

२ १ २ र ३ ४ र ५ ३ २ ३ र ४ र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

९ २ १ १ र ३ ४ ५ ३ २ ३ र ४ र ५
वृजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

१ र २ १ १ र ३ २ ४ ३ र
पाजा। सिक्षणु। षे। नद्दा३यिषू५वा६५६॥(१) प्रू

२ ३ र ४ र ५ १ २ १ र १ र २ ४ ५
रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

३ २ ३ र ४ र ५ १ २ १ १ र ३ ४ ५
सुवा३४औहोवा। सिषा। सा३नृथि। रोगविष्टिषू।

३ २ ३ र ४ र ५ १ २ १ २ ३ ४ ५
इन्द्रा३४औहोवा। स्यप्रू। ष्मा३मीर। यन्नपस्युभा

३ २ ३ र ४ र ५ १ २ र १ २ र ३
यिः। इन्द्र३४औहोवा। हिन्वा। नोअज्य। ते। म

२ ४ ३ २ ३ र ४ र ५ १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

२ १ १ र ३ ४ र ५ ३ २ ३ र ४ र ५
सो। मा३पव। मानऊर्म्मिणा। तवा ३ ४ औहोवा।

१ २ १ २ र ३ ४ र ५ ३ २ ३ र ४ र ५
व्यमा। णो३जठ। रेष्वाविशा। प्रना३४औहोवा।

१ २ १ २ र ३ ४ र ५ २ २ ३ २
पिन्वा। विद्युद। भ्रेवरोदसायि। उऊवायि। धिया

१र ४र ५ १र २ १ १र ३ २ ४
३४औहोवा। नोवा। जा२३प। मा। हिम्रा३स्वा

पूता६५६:(३) ॥ १६ * ॥ [५]

२ १र १ १ २र १ २र १
॥ वायोरभिक्रदन्† ॥ धर्त्तादिवःपवतेकृत्वियो। हो

२ १ र र र र र २ २ २ १
यिरासाः। दक्षोदेवानामनुमादियो१नृ३भायिः। हरिः

र र र २ २ २ ३ ५ ३
स्वजानोअतियोनसा१त्वा३भायिः। वा२३४र्या। पा२३४

५ १ २ २ २ १ २ ४
जा। सायिक्तणुषा३यि। हा२३यि। नदा३यिषू५वा६

१र २र १ २ १र २र १ २र १ २ १
५६ ॥(१) प्रूरोनधत्तआयधागभो। होस्तायोः। स्वःसि

र र २ २ २ १ र २
षासन्नथिरोगवा१यिष्टा३यिषू। इन्द्रस्यप्रुष्ममीरयन्नपा१

२ २ ३ ५ ३ ५ १ २
स्यू३भायिः। आ२३४यिन्दूः। हा२३४यिन्वा। नोअ

२ २ १ २ ४
ज्यता३यि। हा२३यि। मना३यिषा५यिभा६५६यिं ॥(२)

१ २ र १र १र १ २ १ र र
इन्द्रस्यसोमपवमानओ। होर्म्मायिणा। तविष्यमाणो

र २ २ २ १ र २ २ २
जठरेषुआ१वा३यिश्रा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० २३प्र० २ख० १६सा०।

† "वायोरभिक्रन्दः"—इति ख० पु० पाठः।

२ ५ ३ ५ १ २ ३ २ १
यिं। धा२३४या। नो२३४वा। जा६उपमा३। हा२

२ ४
३। च्छिश्वा३श्वा५ता६५६:(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा।

१ २ ३ २उ ३ १ ३क २र २ २ ३ १ २
यदिन्द्रप्रागपागुदग्न्यग्वाहूयसेनृभिः।

१ २ २ १र २र २ २ ३ १ ३ १ २
सिमापुरूनृषूतोअस्यानवेसिप्रशर्द्धतुर्वशे ॥ १ ‡ ॥

हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶ "अञ्चेर्लुगिति (५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः ["न्यधीच (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्य्याय आहूयसे ["हिंसिमश्रेष्ठेन्द्रसिमइतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

* ऊ० गा० १३प्र० २अ० १९सा०।

† उक्ती माध्यन्दिनः पवमानः, इदानीं पृष्ठानुगच्यन्ते—इति वि०।

‡ ऋ० आ० ३, २, ४, ७ (१भा० ५७२पृ०)=ऋ० वे० ५, ७, २०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभि-स्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! "तुर्वशे" —एतन्नामके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १
यद्वारुमेरुशमे श्यावकेकृपइन्द्रमादयसेसचा।

१ २ ३ १ २ ३ १ २ ३ १र २र३ १ २
कण्वासस्त्वास्तोमेभिर्ब्रह्मवाहसइन्द्रायच्छन्त्यागहि ॥२*॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्र!" त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढ़ारः अथवा अन्नानां वोढ़ारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र!" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्र-मागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्] ॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिःस्तोमवाहसः"——इति पाठौ ॥ २ ॥ १३

२ ३ २ ३ १ २र
॥ नैपातिथम् ॥ यदिन्द्रप्रागपागुदग्न्यग्वा । नायम्वा

* ऋ० वे० ५, ७, ३०, १।

हु। यसायिनृभीइः। हा। औहो२३४हा। सिमा२
पुरुनृषूतोअ। सियानवे२३। हा। औहो२३४हा।
असात्विप्रागा३। हा। औहो२३४हा। धा२ता२३४औ
होवा। वा२३४ग्री ॥(१) अग्निप्रशर्द्धतुर्वशा३ए। आसि
प्रश। धतूर्वशे३। हा। औहो२३४हा। यदा२रुमे
रुशमेध्या। वकायिक्रपा२३। हा। औहो२३४हा। इ
न्द्रामादा३। हा। औहो२३४हा। या२सा२३४औ
होवा। सा२३४चा ॥(२) इन्द्रमादयसेसचा३ए। आ
यिन्द्रमाद। यसायिसचा३। हा। औहो२३४हा।
कण्वा२सस्त्वास्तोमेभिर्। ह्मवाहमा२३ः। हा। औ
हो२३४हा। इन्द्रायाच्छा३। हा। औहो२३४हा।
ता२आ२३४औहोवा। गा२३४ही(३) ॥ १५ * ॥ [१] १३

* क० गा० ४प्र० १ख० १५.सा० ।

अथ प्रगाथे चतुर्थसूक्ते*—

प्रथमा ।

३१२ ३१२ ३१२ ३२ ३१११२

उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः ।

३१ २ ३२३ १ २ ३१२ २२३१ २

सत्राच्यामघवांत्सोमपीतयेधियाशविष्ठआगमत् ॥ १† ॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चन्त्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

अथ द्वितीया ।

१उ ३१ २ ३१२ २२ ३१२ ३१२

तꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।

३२ ३१ २ ३१२ ३२ ३१ २ ३ २३१२

उतोपमानाम्प्रथमोनिषीदसिसोमकामꣳहितेमनः ॥ २‡ ॥ १४

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षतुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

* 'अच्छावाकं साम'—इति वि० ।

† छ० आ० ३, १, ५, ८ (१भा० ५९१पृ०)=ऋ० वे० ६, ४, ३५, १ ।

‡ ऋ० वे० ६, ४, ३५, २ ।

इन्द्र! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः॥

"ओजसा"-"ओजसः"—इति पाठौ॥ २॥ १४

॥वैयश्वम्॥ उभयꣳशृणवच्चना३ए। आयिन्द्रो२ अर्वागिदंवचा२३ः। होवा३हायि। सत्राचियामघवा२न्। सो। मापा३हायि। ता२३४यायि। धियाश्र विष्ठआ२३होयि। गमात्। औ२३होवा॥(१) धिया श्रविष्ठआगमा३दे। धाया२श्रविष्ठआगमा२३त्। हो वा३हायि। तꣳहिस्वराजा२वृषभाम्। तामो३हायि। जा२३४सा। धिषणेनिष्टता२३होयि। चक्षः। औ२३ होवा॥(२) धिषणेनिष्टतक्षतू३रे। धायिषा२णेनिष्टत क्षत२३ः। होवा३हायि। उतोपामा२प्रथमो। नायि

२ २ ३ ५ १र र १
षा३र्वायि। दा२३४सायि। सोमकामꣳहितार३यिद्वो

२ १ ४ ५ ४
यि। मना। औ३होवा। होꣳ५ई। डा(३) ॥ १६* ॥[१]

२ १ २ १ र
॥ वाग्रम् ॥ उभयꣳश्रा। णवाच्चा१ना२ः। इन्द्रो

र २ १ र र र र १
अर्वागिदंवा१चा२ः। सत्राच्यामघवांत्सोमपायिता१या

१र १ १ २ ५र र
२यि। धियाग्रा २ ३ वा ३यि। छा२आ२३४औहोवा।

२ ५ १र १ २
गा २ ३ ४मात् ॥(१) धियाग्रवायि। छआगा१मा२त्।

१ र र १ १ र १
धियाग्रविष्ठआगा१मा२त्। तꣳहिस्वराजंवृषभन्तामो१

१ १ १ २ ५र र
जसा२। धिषणे२३ना३यिः। ता२मा २ ३ ४औहोवा।

२ ५ २ र १ २ १
सा२३४तूः ॥(२) धिषणेनायिः। नताच्चा१तू२ः। धि

र २ १र र र र १
षणेनिष्टताच्चा१तू२ः। उतोपमानाम्प्रथमोनिषायिदा१

---

* ऊ० गा० ४प्र० २अ० १६सा०।

सा२यि। सोमका२३मा३म्। हा२यिता२३४औहोवा।
मा२३४ना:(३) ॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम-खण्डे —

तृचात्मके प्रथमसूक्ते —

प्रथमा।

पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः।
वायुमारोहधर्म्मणा ॥ ‡ १ ॥

हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर। अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि ॥

"देवः"-"देव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० ९प्र० २ख० ७गा०।

† 'उक्तानि ग्रन्थानि'—इति वि०।

‡ छ० आ० ६, २, १, ५ ( २भा० ३७पृ० )=ऋ० वे० ७, ४, २३, १।

अथ द्वितीया।

१२ ३ १२ ३१ २ ३१ १
पवमाननितोशसेरयिꣳसोमश्रवाय्यम्।
१२ ३१२ ३२
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान!" "इन्दो!" "सोम!" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीड़यसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृधइति तृतीया‡।

३ १ २ ३ १ २
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता (६, १, १, ६= २भा० ४८ पृ०) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ सुरूपाद्यम् ॥ पवस्वदा२यि। इया२इया। व
२ १ १ १ १ २२ १
आयूषा२क्। इन्द्रङ्गच्छा२। इया२इया। तुतेमा

---

* ऋ० वे० ७, ४, २१, ५।

† 'तोशसे—तंश दाने ददासि'—इति वि०।

‡ छ० आ० ६, १, १, ६ (२भा० ४८पृ०)=ऋ० वे० ७, १, ३४, ४।

दा२ः। वायुमारो२। इया२इया। त्वधर्मा२३णा३
४३॥(१) पवमाना२। इया२इया। नितोशासा२यि।
रयिꣳसोमा२इया। श्रवाय्या२। इन्दोसमू२। इया
२इया। इमावा२३यिश्वा३४३॥(२) अपघ्नन्पा२। इया
२इया। वसेमार्द्धा२ः। क्रतुवित्सो२। इया२इया।
ममत्सारा२ः। नुदस्वादा२यि। इया२इया। वयु
ञ्जा२३ना३४३म्। ओ२३४५ई। डा(३)॥ १७*॥ [१]

॥भासम्†॥ पव। स्वा३दायि। वाः। ईया। आ
यू१षा२क्। आयिन्द्रङ्गच्छ। तु। तौ३त्सो। वाहा
यि। मदा२ः। वायू२३म्। आ२रो२३४औहोवा।
त्वधर्म्मणा१॥(१) पव। मा३ना। नायि। ईया। तो
शा१सा२यि। रायिꣳसोम। आवौ३र्दो। वाह्वायि।

---

* ऊ० गा० ४प्र० २ख० १७सा०।

† "गायत्रीभासम्"—इति ख० पु०।

इया२म्। इन्दो२३। सा२मू२३४औहोवा। इमा
विश्वा१॥(२) अप। घ्ना३न्पा। वा। ई२था। साथि
मार्धा२ः। क्रातुवित्सो। म। मौ३हो। वाहा। मत्स२ः।
नुदा२३। स्वा२दा२३४औहोवा। वयुञ्जना१म्(३)

॥ १८ *॥ [२]

॥ काक्षीवन्तम् † ॥ पवस्वा३देवआयुषाक्। इन्द्रा
ङ्गच्छ। तुतेमदा३ः। ओ३४। हाहोयि। वायूमार
३रो। हधौहोयि। औहो२३४वा। मा५णो६हायि॥(१)
पवमाननितोश्नसायि। रयायि९सोम। अवायियाइम्।
औ३४। हाहोयि। इन्दोसा२३म्। इमौहोयि। औ
हो२३४वा। वा५यिश्नो६हायि॥(२) अपघ्ना३न्पवसेमृ
धाः। क्रतूवित्सो। ममत्सरा३ः। ओ३४। हाहोयि।

* ऊ० गा० ४प्र० २ख० १८सा०।
† "काक्षीवतम्"—इति ख० पु० पाठः।

नुदाखार२३दायि। वायौहोयि। औहो२३४वा। जापूनोई२वायि(३) ॥ १९ * ॥ [३]

॥ गायत्रासितम् † ॥ पवस्वदेववा। इया३४३ई३४या। युषागिन्द्रङ्गच्छतुतौ२। चौ२। ऊवा२यि। मादा२ः। वायू३९चौयि। आरो३हो। चधर्म्मा२३णा३४३ ॥(१) पवमाननितौ। इया३४३ई३४या। शसायि रयिंसोमश्रवौ२। चौ२। ऊवा२यि। आया२म्। इन्दो३चोयि। समू३हो। द्रमावा२३यिशा३४३ ॥(२) अपघ्नन्पवसे। इया ३ ४ ३ई३४या। म्टधाःक्रतुवित्सोम मौ२। चौ२। ऊवा२यि। त्सारा२ः। नुदा३हो यि। खादा३चो। वयुञ्जा२३ना३४३म्। ओ२३४५ई। डा(३) ॥ २० ‡ ॥ [४]

---

* ऋ० गा० ४प्र० २ख० १९सा० ।

† "वासिष्ठमासितम्"—इति ख० पु० ।

‡ ऋ० गा० ४प्र० २ख० २०सा० ।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वश्चायर२ ३षाक्। इन्द्रञ्च्छतुना१यिमा३दाः। वायुमारो२३४ हायि। हाधा३हा। मणा। औ३होवा॥(१) पव मानो। हायि। नितोश्चा२३सायि। रयिंऽसोमश्रवा१ आ३याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि शा। औ३होवा॥(२) अपघ्नन्यो। हायि। वसैमा २३र्धाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादो२३४हा यि। वायू३ऽहायि। जनाम्। औ२३होवा। हो५ ई। डा(३)॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता (६, २, १, ५=२भा० १६१पृ०) व्याख्याता च ॥ १ ॥

* ऊ० गा० १७प्र० १ख० १खा० ।

† छ० आ० ६, ७, १, ४ (२भा० १६१पृ०)=ऋ० वे० ७, ४, २३, १ ।

अथ द्वितीया।

३ १ २ ३ १र २र ३ १ २ ३ १ २
वयन्ते अस्यराधसोवसोर्वसोपुरुस्पृहः।
१ २र, ३ १र २र ३ १ २
निनेदिष्ठतमाइषःस्यामसुम्नेते अध्रिगो॥ २ *॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्तमन्तिकतमाः "स्याम" भवेम॥ २॥

अथ तृतीया।

२ ३ २ ३ १ २ ३ २ ३ ३ १ २
परिस्यस्वानोअक्षरदिन्दुरव्येमदच्युतः।
२ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
धारायऊर्द्ध्वोअध्वरेभ्राजानयातिगव्ययुः॥३†॥ १६

"गव्ययुः" गोकामः यद्वा क्षीरादि कामयमानः "ऊर्द्ध्वः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्त्या अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

---

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, ३।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यचरत्" परितः चरति ।

"अचरत्"-"अचाः"—इति पाठौ ॥ ३ ॥ १६

॥ गौरीवितम्* ॥ अभी । नोवा२ । जसातमाम् । रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । स्रभा पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । सा५हो६ हायि ॥(१) वयम् । तेआ२ । स्यराधसाः । वसोर्वसो पुरुस्पृहा२३ः । नायिनेदिष्ठा३१२३ । तमा५इषाः । स्थामे सुम्ना३१२३यि । तओवा । धा५यिगो६हायि ॥(२) परि । स्रखा२ । नोअचरात् । इन्दुरव्येमदच्युता२३ः । धा रायऊ३१२३ । ध्वौआ५ध्वरायि । भ्राजानया३१२३ । ति गोवा । व्या५यो६हायि(३) ॥ ३ † ॥ [१]

॥ ऐडकौत्सम् ॥ अभोहोनो२३ । वाजसातममीया ।

---

* "महागौरीवितम्"--इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १ख० १खा० ।

२ १ १२ १ २ १ १ २
रयिमर्षशतस्पृहम्। आयिन्दोसच। स्वभर्णा२३साम्।
१२ २ १२ २ १२ २
तूवा३हायि। द्यूम्ना३ हायि। विभासा२३हा३४३म् ॥(१)

वयऽ२धीते२३। अस्यराधसई्या। वसोर्वसोपुरुस्पृहः।
१ २ २ १२ २ १ २ २ १ २
नायिनेदिष्ठ। तमा आ२३यिषाः। स्यामा३हायि। सूम्ना
२ २ १ २ २ २ १
३यिहायि। तेअभा२३यिगा३४३उ ॥(२) परीहिस्या२३ः।
४२ २ ५ १ २ १ २२ १ २ १ २ २ २
स्वानोअत्तरदीया। इन्दुरव्यमदच्युतः। धारायज।
२ १ २ १ २ २ १ २ २ १
ध्वोअध्वा२३रायि। भ्राजा३हा। नाया३हा। तिगव्या
२ १
२३यू३४३ः। ओ२३४५ई। डा(३) ॥ ४ * ॥ [२]
२ १२ २ १२ १२ १ १
॥ प्रुद्वाप्रुद्वीयाद्यम् † ॥ अभीनोवाजसातमाम्। रयि
२ १ २ १२ २ १ २ १
मर्षशतस्पृ२३हाम्। इन्दोसहस्रभर्णा२३साम्। तुवा
२ ३२ २ ५२ २ ३ १
यिद्यू२३म्ना३म्। वा२यि। भामा३४औहोवा। हा२
१ १ १ २ १ २ २ १२ २ १ २ २ २ १ २
३४५म् ॥(१) वयन्तेअस्यराधसाः। वसोर्वसोपुरुस्पृ२३हाः।

* ऊ० गा० ५प्र० १अ० ५सा०।

† "प्रुद्वाम्नप्रुद्वाप्रुद्वीयाद्यम्"—इति ख० पु०।

१ र १ १र २ र १ १ १
निनेदिष्ठतमाआ२३यिषाः। स्वामसू२३म्नाश्यि। तो२।

३ २ ५र र २ १ १ १ १ १ १ २ १ २र १र २
अध्रा३४औहोवा। गा२३४५उ ॥(२) परिस्यस्वानोअक्ष

१ र २ १ २ १र र र २र १
रात्। इन्दुरव्येमदच्यु२३ताः। धारायऊर्ध्वोअध्वा२३

२ र १र १ १ ३ २ ५र र
रायि। म्राजाना२३या३। ता२यि। गव्या३४औहो

३ १ १ १ १
वा। यू२३४५ः(३) ॥ ५ * ॥ [३]

२ र १र र २र १र २
॥ क्रौञ्चाद्यम् ॥ अमीनोवौहो। जासातमाम्। र

१ २ ४ २ र १ र
यिमर्षा३। आता ३ स्तू५हा६ ५ ६म्। इन्दोसहौहो।

२र १ २ १ २ ४
स्वाभर्णसाम्। तुयिद्युम्ना३म्। वायिभा३सा५हा६५६म्॥(१)

२ १ र २र १र १ र १ २ ४
वयन्तऔहो। स्वाराधसाः। वसोर्वसा३उ। पूरू३स्पृ

१ र १ र २र १र १र
५हा६५६ः। निनेदिष्ठौहो। तामाइषाः। स्वामसु

१ २ ४ १ १र
म्नाश्यि। तेआ३ध्रा५यिगा६५६उ ॥(२) परिस्यसौहो।

२र १ २ १ २
नोअक्षरात्। इन्दुरव्याश्यि। मादा३च्यू५ता ६ ५ ६ः।

---

* ऊ० गा० ५प्र० १अ० ५सा०।

१र २ १ र   १र १   २र र   १
धारायऔहो। ध्वोअध्वरायि। भ्राजानया३। तायि
२ ४
गा३व्या५यू६५६ः(३) ॥ ६ * ॥ [४]

२ र र   १ २ २   ५
रयिष्ठम्॥ अभीनोवा। जमाता३माम्। औ३
२ २   १ २   १ २ १ १ १ १   २   १
हो३वा। रयिमर्षशतस्पृहा२३४५म्। रयिमर्षा। शता
२ २   ५ २ २   १ र ११ २ ३ १ १ १ १ १ २
स्पृ३हाम्। औ३हो३वा। इन्दोसहस्रभर्णसा२३४५म्।
र   १ २ २   ५ २ २   १
इन्दोसहा। स्रभार्णा३साम्। औ३हो३वा। तुविद्यु
२र १ ३ १ १ १ १   २   १ २ २
म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासा३हाम्।
५ २ २   २ र   १ २ २   ५
औ३हो३वा ॥(१) वयन्तेआ। स्यराधा३साः। औ३
२ २   १ र २ र   १ ३ १ १ १ १   २ र
हो३वा। वसोर्वसोपुरुस्पृहा२३४५ः। वसोर्वसाउ
१ २ २   ५ २ २   १र २ र ३ २
पुरुस्पृ३हाः। औ३हो३वा। जिनेदिष्ठनमाइषा१ः।
२ र   १ २ २   ५ २ २   १र
निनेदिष्ठा। तमाआ३यिषाः। औ३हो३वा। स्याम
२र र र २   ३ १ १ १ १   २र   र १ २
सुम्ने तेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्रा३यि

* ऊ० गा० ५प्र० १ख० ६मा०।

गा। औ३हो३वा ॥(२) परिस्रुवा। नोआहा३रात्। औ३हो३वा। इन्दुरव्येमदच्युता२३४५ः। इन्दुरव्यायि। मदाच्यु३ताः। औ३हो३वा। धारायऊर्ज्जाँअध्वरा१यि। धारायऊ। ध्वोआध्वा३रायि। औ३हो३वा। आजा नयातिगव्यय१ः। आजानया। तिगाव्या३यूः। औ३ हो३वा। औ३हो३वा। ई३या। ई३या३४। हा। हाउवा३। ऊ३२३४पा(३) ॥ ७ * ॥ [५]

॥ औदलम् ॥ अभीनोवा। जासा२तमाम्। रयि मर्षा३। शातस्प२३४हाम्। इंदोसहा। स्राभा२र्ण साम्। तुवायिद्यू२३म्ना३म्। वार३यिभा३। सा३४५ हो६५६हायि ॥(१) वयन्तेआ। स्यारा२धसाः। वसो र्वसा३उ। पूरुस्पं२३४हाः। निनेदिष्ठा। तामा२इषाः।

---

* ऊ० गा० ५प्र० १अ० ७सा० ।

स्याममू२३स्नाइयि। ते२३आ३। धा३४५यिगो६हायि ॥(२) परिस्रवा। नोआ२स्वरात्। इन्दुरव्या इयि। मादच्यौ२३४ताः। धारायजा। ध्वोआ२ध्वरायि। आजाना२३या३। ता२३यिगा३। व्या३४५यो६हायि(३) ॥८*॥ [६]

॥ श्यावाश्वम् ॥ अभा३१यि। नो३वा। जसा। ता३मम्। एह्रिया। रा। यिमर्षशा। त। स्पृहा२म्। एह्रिया२। इन्दोसहास्ना३भा३। णा२३४साम्। ऐहा२यि। एह्रिया२। तुविद्युम्नावा३यिभा३। सा३४५हो६हायि ॥(१) वया३१म्। ते३अ। स्यरा। धा३मः। एह्रिया। वा। सोवंसोपू। रु। स्पृहा२ः। एह्रिया२। निनेदिष्ठाता३मा३ः। आ२३४यिषाः। ऐहा२यि। एह्रिया२। स्यामसुम्नायिते३आ३। धा३४५यिगो६

* ऊ० गा० ५प्र० १ख० ८सा०।

ह्वायि ॥(१) परा३१यि । ख्या३ख्वा । नौ३ । चा३रत् ।

एहिया । आयि । दुरव्येमा । द । च्युता२ः । एहिया

२ । धारायऊर्द्धो३आ३ । धा२३४रायि । ऐहा२र्यि ।

एहिया२ । भाजानयाता३यिगा३ । व्या३ ४ ५ योऽ६हा

यि(३) ॥ १ ५ * ॥ [७]

॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम । रयिम ।

षष्ठा२३ता । ऊम्मा२१ऽ२ । स्पृहमिन्दोमहस्रभर्णसा२

३४५म् । तुवा३उवा । द्यु२म्नाम् । वा२३यिभा । स

हाम् । औ२३होवा ॥(१) वयन्ते अस्यरा१धासा: । वसो

र्वे । सोपू२३ह । ऊम्मा२१ऽ२ । स्पृहोनिनेदिष्ठतमा

दूषा१ः । स्यामा३उवा । सू२म्नायि । ते२३आ । ध्रि

गा । औ३होवा ॥(२) परिस्यस्वानोआ१क्षारात् । इन्दु

* ऊ० गा० १०प्र० १ख० १५गा० ।

र र २ १ १ र र २र१२र१र
र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायजङ्घ्रौ

२,३२ २ २ १ २
अध्वरा१यि। भ्राजा३उवा। ना२या। ता२३यिगा।

१ ४ ५ ४
व्ययैः। औ२३होवा। हो५ई। डा(३)॥१६*॥[८]

२ र र र २र १ २
॥निषेधम्†॥ अभीनोवाजा३सातमाम्। रयायिम

१ २ १ १२ १ २ ४ ५ २
र्षा। शतस्पृहा२म्। इहा३। आयिन्दो३साहा। हा

३ ५ २ १ २ १२ १२ ४
हो२३४हा। स्वभर्णा२३साम्। इहा३। तुवा३यिद्यु

५ २,३ ५ ३२ ४
म्नाम्। हाहो २ ३ ४ हा। विभा३सा५हा६५६म्॥(१)

२ र २र १२१ २ १
वयन्तेअस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा२ः।

१२ १ २ ४ ५ २,३ ५ १र१
इहा३। नायिने३दायिष्ठा। हाहो२३४हा। तमाआ

२ १२ १ २ ४५ २,३ ५
२३यिषाः। इहा३। स्यामा३सुम्नायि। हाहो२३४हा।

३र२ ४ २ र २
तेआ३धा५यिगा६५६उ॥(२) परिस्यस्वानो३अचरात्।

१२१ २ १ १२ १ २ ४ ५
इन्दुरव्यायि। मदच्युता२ः। इहा३। धारा३याज।

---

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः"—इति ख० पु० पाठः।

२ ३ ३ २र १ २ १ २ १ २
हाहोर३४हा। ध्वोअध्वार३रायि। इहा३। भाजा
४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहो२३४हा। तिगा३व्या५यू६५६:। हे२३
१ १
४५(३)॥ १२ *॥ [९]

५ र २ ४र५ ४र ५ २ १ २ १
॥ साधम्॥ अभीनो३वाजसातमाम्। रयायिमर्षा
३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३
१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। तुवाओ२३४वा। द्युम्नाओ२३४वा। विभा५
५ २ ४ ५ ४र ५ २ १ २ १
सहाम्॥(१) वयन्ते३अस्यराधसाः। वसोर्वसा २ ३।
३ २ ३ ५ १ र २ २ ३ २ २
पुरु३४५। स्पृ२३हाः। निनेदिष्ठतमाइषा१ः। स्यामा
३ ५ १ २ ३ ५ ४र
ओ२३४वा। सुम्नाओ२३४वा। तेआ५धिगाउ॥(२)
५ २ ४ ५र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा३४५।
३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यू२३४ताः। धारायऊर्ध्वोअध्वरा१यि। भाजाओ२३४

* ऊ० गा० १७प्र० १अ० १२खा०।

५ १ २ ३ ५ ४ ४
वा। नायाश्मोर ३४ वा। तिगा ५ व्ययूः। हो५ई।
डा(३)॥ १३ *॥ [१०]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम्॥ अभा5५यिनः। वा३जा३साता
५ १ २ १ २ २ १ १
माम्। रायिमर्षा। प्रा३तास्पृहाम्। इन्दो२स।
२ १ २ २ १
द्दस्वा२३भा। ऊम्माथि। णा३साम्। त्वविद्युम्नंविभा
३ २ १ २ १र र र र
२सद्दाउ॥(१) हावा। यन्तेअस्वराधसोवसोवसाउ।
२ १ ३ २ १ १ २ १
पू३रुस्पृ३हाः। निने२दि। छ्ता२३माः। ऊम्माथि।
२ २ १ र र ३ २ १ २
आ ३ यिषाः। स्यामसुम्नेतेआ२ध्रिगाउ॥(२) गोपा।
१ र र २ १ २ २ १र
रिस्यस्वानोअत्त्वरदिन्दुरव्यायि। मा३दाच्यू३ताः। धा
१ र २ १ २ २ १ र
रा२यः। ऊर्द्ध्वी२३आ। ऊम्माथि। ध्वा३रायि। भ्राजा
र ३ २ १ १ १
नयातिगा२व्ययाउ। वा३४५(३)॥ १४ †॥ [११]

* ऊ० गा० १७प्र० १ख० १३सा०।

† ऊ० गा० १७प्र० १ख० १४सा०।

२ र र र  २र  १ ,
॥ स्वारकौत्सम् ॥ अभीनोवाजाइसातमाम् । रयि

२ २ २ र  २ १२ २
मर्षश्रता१स्पृ२हाम् । इन्दोसद्दा२ । स्वा२भार्णा२साम् ।

१ ३ ५ ३ २ ३
आऽ२यि । तुविद्युम्नो२३४हायि । विभा२सा५हाई५६म् ॥(१)

२ र  २र  १ र र २ २ २ र
वयन्ते अस्या२राधसा: । वसोर्वसोपुरु१स्पृ२हा: । निने

२ १ २ २ १ र ३
दिष्ठा२ । ता२मा आ२यिषा: । आऽ२यि । स्यामसुम्नो

५ ३र २ ४ २ र
२३४हायि । ते आ२घ्रा५यिगा६५६उ ॥(१) परिस्यस्वा

२ १ र २ २ २ र र
नो२अक्षरात् । इन्दुरव्ये मदा१च्यू२ता: । धारायऊ२ ।

२ १ २ २ १ र र ३ ५
र्ध्वो२आध्वा२रायि । आऽ२यि । भ्राजानयो२३४हायि ।

३ २ ४
तिगा२व्या५यू६५६:(३) ॥ १८ * ॥ [१२]

२ र र  ३ ५ २
॥ कार्त्तयशसम् ॥ अभीहाहाउ । नो२३४वा । ज

१ २ २ ४ ५ २१ २ २ ४ ५
साओ२होइतामाम् । रयायिमौ२होइयि । आर्षा६ ।

५ २ १ १ २ १ र २ २
हाउवा । श्रतस्पृहा२म् । उपा । इन्दोसहस्रभा१र्णा

* क० गा० १७प्र० १अ० १९गा० ।

५ २ १ १ २ ४ ५ ५ २
३साम् । तुवऔ३हो३यि । द्यूम्ना६म् । हाउवा । वि
२ १ ३ १ १११ २ २ ३
भासहम् । उपा२३४५ ॥(१) वय९हाहाउ । ते २ ३ ४
५ २ १ २ २ ४ ५ २ १ २ २
औ । स्वराऔ३हो३ । धासाः । वसाऔ३हो ३ यि ।
४ ५ ५ २ १ १ २ १ २
वासा६उ । हाउवा । पुरुस्पृहा २ः । उपा । निनेदि
२ २ २ २ १ २ २ ४ ५
ष्ठतमा१आ३यिषाः । स्यामाऔ३हो३यि । सूम्ना६हायि ।
५ २२ १ २ ३ ११११ १२ २
हाउवा । तेअध्रिगो । उपा२३४५ ॥(२) परीहाहाउ ।
३ ५ २२ १ २ २ ४ ५ २ १ २ २
स्या२३४स्वा । नोआऔ३हो३ । चारात् । इन्दूरौ३होइ
२ ५ ५ २ १ १ २
यि । आव्या६यि । हाउवा । मदच्युता २ः । उपा ।
१२ २ २ २ २ २ २ २ १ २ २ ४ ५
धारायऊर्व्याआ१ध्वा३रायि । भ्राजाऔ३हो३ । नाया
५ २ १ ३१११
६ । हाउवा । तिगव्ययूः । उपा२३४५(३) ॥ १० * ॥[१३]

२ २ २ २
॥ नीतन्वाष्ट्रीसाम† ॥ अभीनोवा । जसा३तमाम् ।
१ २ २ २ २ ३२ १ २ २
रयायिमर्षा३भता३ । ए३ । स्पृहमा । इन्दोसहा३स्रभा

* ऊ० गा० १८प्र० १ख० १०सा० । † "नानलाष्ट्री साम"—इति ख० पु० पाठः ।

१ २ ३ २ १ १ २ १
३ । ए३ । णसमा । तुवायिद्यु्म्ना३विभा३ । ए३ ।

२ ३ २
सद्‌मा(१) ॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते—

प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १र २र
पवस्वसोममहान्त्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम !" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम !" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर । किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु ॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ ॥ २ ॥

---

* ऊ० गा० १६प्र० २ख० ६गा० ।

† ऋ० आ० ५, १, ५, २ ( १भा० ८७३पृ० )=ऋ० वे० ७, ५, २०, ४ ।

‡ ऋ० वे० ७, ५, २०, ५ ।

अथ तृतीया।

२ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन्] यज्ञे "पवस्व" चर॥ ३ ॥ १७

॥धर्मम्॥ औहोऽवा। औहोऽवा। औहोरवा
२३४औहो६वा। पवस्वसोममहान्समुद्राः। पितादेर
वाना२विश्व। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य
सोमा२३४५। दिवेप्रथिव्यैशञ्चप्रजाभ्या२३४५ः। दिवो
धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्म्मन्वाजीपवस्वा
२३४५॥(१) पवस्वसोमा२३४५। महान्समुद्राः। पिता
देरवाना२३४५म्। विश्वाभिधामार३४५॥(२) शुक्र

* ऋ० वे० ७, ५, १०६।

१ २ १ १ १ १ १२ १२ १२ २ १ १ १ १ २ १२ २ १
पवस्वा२३४४ । देवेभ्यःसोमा२३४५ । दिवेपृथिव्या१यि ।

२ १२ १ १ १ १ २ १२ २ १२ ३ १ १ १ १ २ १ १२ १२
अञ्चप्रचाभ्या२३४५ः । दिवोधर्त्तासी२३४५ । शुक्रःपीयू

१ १ १ १ २ १२ १ २ २१ १२ २ ३ १ १ १ १
षा२३४५ः । सत्ये विधर्म्मा१न् । वाजीपवस्वा२ ३ ४ ५ ।

२१ २ २ १ २ ५२ ५ २ १
औहोऽवा२ । औहोऽवा२३४औहो६वा । ए३ । धर्म्मा

१ १ १
२३४५(३) ॥ ८ * ॥ [१]

२ २ १ २ १
॥ आभीगवम् ॥ पा१वास्वा । सो२३मा । ऊम्मा२

१२ २ १ २ १२ २१२ १२ २ १ १ १ १ १ २
१ऽ२ । महान्समुद्रःपितादेवाना२३४५म् । वायिश्वा३

२ १ २ १ २ ४ ५ ४
उवा । भा२३यिधा । मा । औ३होवा । हो५ई ।

डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १अ० ९सा० ।

† ऊ० गा० २१प्र० ३अ० ८सा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति त्र्यृचात्मकं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २      २ १ ३ १ २      ३ १
प्रेष्ठंवो अतिथिᳬस्तुषे मित्रमिवप्रियम् ।

२ ३ १ २ ३ १ २   ३ २
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुशनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने ( भ्वा० प० ) ऋतन्यञ्जि ( उ० ४,२ )"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेदो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिद्ध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"-"अग्निम्"—इति पाठौ ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति यौशनं प्रथममुक्थम्-इति वि०।

† छ० आ० १, १, १, ५ ( १भा० १००पृ० ) = ऋ० वे० ६, ६, ५, १ = य० वे० १२, ५१ ।

२र १ र र २ १ २
मोअन्धसा । आयिणन्तोगो३१ । भिद्रत्ता२३रा३४३म् ।
१
ओ२३४५ई । डा(३) ॥ ४ * ॥ [८]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिञ्चतासुतᳪ ह्वाउ । सोमो
१ २ १ २ १ २ १ २ २
यउत्तमᳪ हविः । दधन्वाᳪ १या २ ३ः । हौवा३हायि ।
२ २र १ २ १ २ १ १
मारियोअ । पृ वान्ता१रा२३ । हौवा३हायि । सुषा
२ १ २ २ १ २ १ २
वा१सो२३ । हौवा३हा । मामद्रिभिः । इडा२३भा३४
१
३ । ओ२३४५ई । डा(१) ॥ २ † ॥ [९]

२ र र र
॥ अभीशवोत्तरम् ॥ परीतोषिञ्चतासुतम्ए । ए ।
र र १ ० २ ३ ५ २ २
सोमोयजऽ३त्तामᳪ हाविः । दा२३४धा । हा३हायि ।
१र र र ० १ ३ ५ २ २ १र
न्वाᳪ योनर्य्योअप्स्वन्तारा । सू२३४षा । हा३हायि । वा
२ १र ५ ४ ५ २ र र
सोममो२३४वा । द्रा५यिभो६हायि ॥(१) सुषावसोम

---

* ऊ० गा० ७प्र० १ख० ४सा० ।

† ऊ० गा० ७प्र० २ख० ३सा० ।

र र ऽ १ ७ २ ३
मद्रिभिरे। ए।। सुषावसो३मामद्रि। भायिः। नू२३४
५ २ २ १ र र ७ २ २
नाम्। हा३हायि। पुनानोअविभिःपारिस्रावा। आ
५ २ २ १ २ १ ५ ४
२३४द्रा। हा३हायि। अब्धाःस्वरभोर २ ३ ४वा। ताऽपूरो६
५ २ १ ७
हायि॥(२) अदब्धःसुरभिन्तरए। ए। अदब्धःसू३राभि
२ ३ ५ २ २ १ र र ७
न्तारः। सू२३४ते। हा३हायि। चित्त्वाऽसुमदामोअ
२ ३ ५ २ ३ १ र २ १
न्धासा। आर२३४यिणा। हा३हा। तोगोभिरो२ ३ ४
५ ४ ५
वा। ताऽपूरो६हायि(३)॥ ४ *॥ [१०]

१ २र १र २ १र २ १ र र २
॥ सम्मतम्॥ परीतोषिञ्चतासुताम्। सोमोयउत्त
१ २ १ १र १
मऽहवायिः। दधन्वाऽ२३याः। नारियोअ। प्सुवा
२ ३र २ ३र २ १ २ १
न्तारा। औहो३४वाहायि। सु। षावा२३सो३। हो
२ २ १ २ २ १र २ १र २ १
वा३हा। ममद्रा २ ३ यिभा३४३यिः॥(१) सुषावसोमम
२ १ र २ १ र २
द्रिभायिः। सुषावसोऽममद्रिभायिः। नूनमपू २ ३ना।

---

* ऊ० गा० ७प्र० २ख० ४सा०।

नोअविभिः। परायिस्रावा। औहोऽ३४वाहायि। अ।

दाब्धार२३:सू३। होवा३हा। रभिन्तार२३रा३४३: ॥(२)

अदब्धःसूरभिन्तराः। अदब्धःसूरभिन्तराः। सुतेचार२३

यिला। आसुमदा। मोआन्धासा। औहो३४वाहा

यि। श्री। णान्तो२३गो३। होवा३हायि। भिरुत्ता

२३रा३४३म्। ओ२३४५ई। डा(३) ॥ ३ * ॥ [११]

॥ कालेयम् † ॥ परीतो३षिञ्चतासुताम्। सोमोय

उ। तमऽ्हवा२३यिः। दधन्वाऽ्या३ः। नार२३४।

रियोअप्सुव। ता३रा। सुषावसौ। वा३४३ओ३४वा।

ममा५द्रिभायिः। होऽ५ई। डा(३) ॥ ४ ‡ ॥ [१२]

॥ रौरवम् ॥ परीतोषिञ्चा३तासू२३४ताम्। सोऽ

---

* ऊ० गा० ६प्र० १अ० ३सा०।

† "महाकालेयम्"—इति ख०-पाठः।

‡ ऊ० गा० ६प्र० २अ० ४सा०

मोयउत्तमꣳहविर्धन्वाꣳयोनर्योअप्सु वा२न्तरा। ओहा३उवा। सुषावसोममा २ ३ हायि। ओहा३उवा। द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४ यिभायिः। सुषावसोममद्रिभिर्नूनम्पुनानोअविभिःपरा२ यिस्रवा। ओहा३उवा। अदब्धःसुरभा२३यिहायि। ओहा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भिन्ता२३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्वाप्सुमदामोअ२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरु२३हायि। ओहा३उवा। तराम्। औ२३होवा। हो५ई। डा(३)॥११*॥[१३]

॥ आष्टादꣳष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयाहौ। हो३वा। सोमोयउत्तमम्। होवा२३यिः। ऐया२३त्।

* ऊ० गा० ६प्र० ३अ० ११सा०।

१ र २ १र र र १ १
औ२३होवा । दधन्वाᳪयोनर्यो अप्सुव । तारा २ ३ ।
१र १ र २ १र२ १र २ १
ऐया२३त् । औ२३होवा । सुषावसोमम । द्रायिभा
१र १ र २ २१र २ १र
२३यिः । ऐया२३त् । औ२३होवा३४३ ॥(१) सुषावसो
२ १ २ १र २र १र २ २ १र २ १र२ १
ममद्रिभिरैयादौ । हो३वा । सुषावसोमम । द्रायिभा
१र १ र २ र १ २र १र २
२३यिः । ऐया२३त् । औ२३होवा । नूनम्पुनानोविभिः
१ १र १ र र १ २
परि । स्रावा२३ । ऐया२३त् । औ२३होवा । अदब्धः
१ १र १ र २
सुरभि । ता२३त् । ऐया२३त् । औ२३होवा३४३ ॥(२)
१ २ १ २१र २र १र २ २ १ १
अदब्धःसुरभिन्तरऐयादौ । हो३वा । अदब्धःसुरभि ।
१ १र १ र२ १र २र १
तारा२३ः । ऐया२३त् । औ२३होवा । सुतेचित्त्वाप्सु
२र र १ १र र १ २र १र
मदामोअ । धासा२३ । ऐया२३होवा । श्रीणन्तोगो
२ १ १र १ र २
भिरु । तारा२३म् । ऐया२३त् । औ२३होवा३४३ ।
१
ओ२३४५ । ई । डा(३) ॥ १८ * ॥ [१४]

* ऊ० गा० १२प्र० १अ० १८सा० ।

३ ४र ३र ४ ३र ४ ५ र ३
॥ उत्सेधम् ॥ परीतोषिञ्चतासुतम् । सोमः । य
२ ३र ४र ५ २ १
ऊ३४औहोवा । तमᳲवाऽ२यिः । हा३१उवा २ ३ ।
२ ५ ३ २ ४र ५र ४ ५ १
ऊ ३४ पा । दधा३न्वाᳲया । औहोवाहायि । नारि
२र १ २ १ २र २ ५
योआ । प्सुवन्तारा । हा३१उवा२३ । अ३४पा ।
३ २ ४ र ५र ४ ५ ३ २ ४
सुषा३वसो । अहौवाहायि । ममा३द्रा५यिभा ६ ५ ६
४ ३र ४ ३र ४ ३ ४ ५ र ३ २ ३र ४र
यिः ॥(१) सुषावसोममद्रिभिः । सुषा । वसो३४औहो
५ २ १ २ ५
वा । ममद्रिभाऽ२यिः । हा३१उवा२३ । ऊ ३ ४ पा ।
३र २ ४ र ५र ४ ५ १ २ १ २
नूना३पुना । औहोवाहायि । नोअविभायिः । परि
१ २ २ ५ ३ २ ४ ५र
स्राव । हा३१उवा२३ । ऊ३४पा । अदा३ध्वः सु । औ
४ ५ ३ २ ४ ३ ४
होवाहायि । रभा३यित्ता५रा६५६ः ॥(२) अदध्वःसुर
३ ४ ५ ३ २ ३र ४र ५ २ १
भिन्तरः । अद । ब्धः सू३४औहोवा । रभिन्तराऽ२रः ।
२ ५ ३ २ ४ ५र ४
हा३१उवा२३ । ऊ३४पा । सुता३यिचित्त्वा । औहो
५ १ २ १ २र १ २र
वाहायि । आप्सुमदा । मोअन्धासा । हा३१उवा२

२ ५ ३र २ ४र ५ ५र ४ ५ ३
३। ऊ३४पा। औणा३न्तोगो। औहोवाहायि। भि

२ ४
हृ३त्ता५रा६५६म्(३) ॥ २० * ॥ [१५]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिञ्चतासुतꣳहाउ। सोमो

१ २ १ २ १ २ १ २ २
यउत्तमꣳहविः। दधान्वाꣳ१या२३ः। होवा३हायि।

१ २र १ २ १ २ २ १
नारियोअ। प्सवान्ता१रा२३। होवा३हायि। सुषा

२ १ २ २ १ २ १
वा१मा२३। होवा३हा। मामद्रिभिः। इडा२३ ॥(१)

२ १ ४र ५ २ १र २ १र २ १ २ १र
सुषावा२३सोममद्रिभिर्हाउ। सुषावसोममद्रिभिः। नू

२ १ २ २ १र २ १
नाम्पू१ना२३। होवा३हायि। नोअविभिः। परायि

२ १ २ २ १ २ १ २
स्ता१वा२३। होवा३हायि। अदाभ्या१ःसू२३। होवा३

२ १ २ १ २ १ ४
हा। राभिन्तरः। इडा२३ ॥(२) अदाभ्या२३ःसुरभि

र ५ १ २ १ २ १ २
न्तरोहाउ ॥(२) अदब्धःसुरभिन्तरः। सुतायिचा१यि

१ २ २ १ २र र १ २
त्वा२३। होवा३हायि। अप्सुमदा। मोआन्धा१सा

---

* ऊ० गा० १२प्र० २ख० २०सा०।

२३ । द्दोवा३हायि । ओणान्तो१गो२३ । द्दोवा३हायि । भायिहृत्तरम् । इडा२३(३) ॥ ६ * ॥ [१५]

॥ वाम्रम् ॥ परीतोषिञ्चता । हा३हा३यि । सू२३४ । तऽ्सुतोवा । सोमोद्दो२यि । यऊहो२ । तामऽ्हावा२यिः । दाधन्वाऽ्य । नरायियोआ । प्सुवाउवा३ । ऊ३४पा । तरा२ । सुषा२वासो२ । मम । द्रा२यिभा२३४औहोवा ॥(१) सुषावसोममा । हा३हायि । द्रा२३४यि । भिद्रिंभोवाःसुषाद्दो२ई । वसाद्दो२ । मामद्रायिभा२यिः । ननम्पुना । नोआवायिभायिः । पराउवा३ । ऊ३४पा । स्रवा२ । आदा२ब्धाःसू२ । र्भि । तारा२३४औहोवा ॥(२) अदब्धःसुरभि । हा३हा३यि । ता२३४ । रस्तरोवा । अदाही

* ऊँ० गा० १५प्र०१अ० ६सा० ।

२यि । ब्यःह्वो२ । राभिन्तारा२ः । ह्वतेचित्वा । प्रा
माद्दा । मआउवा३ । ऊ३४पा । धमा२ । आयिणा
२न्तोगो२ । भिद् । ता२रा२३४औहोवा । ऊ२३
४पा(३) ॥ १२ * ॥ [१६]

॥ मानवोत्तरम् ॥ हावायि । परीतोषिञ्चतासुतम् ।
होवायि । सोमोयउत्तमꣳहविः । दाधन्वाꣳयः । ना
रियोआ३१ । प्सूवा२न्ता२३४रा । सुषावा२ ३ सो ३ ।
मा२मा२३४औहोवा । द्रा२३४यिभीः ॥(१) होवायि ।
सुषावसोममद्रिभिः । होवायि । ह्वषावसोममद्रिभिः ।
नूनम्पुना । नोअविभा३१यिः । परा२यिस्रा२३४वा ।
अदाध्वा२३ःह्व३ । रा२३४औहोवा । ता२३४राः ॥(२)
होवायि । अदब्धःसुरभिन्तरः । होवायि । आदब्धः

* ऊ० गा० १५प्र० २ऋ० १२सा० ।

सुरभिन्तरः। ह्वोवायि। आदब्धःसुरभिन्तरः। ह्वते चित्वा। आप्सुमदा३१। मोआ२न्धा२३४सा। ओणा न्तो२३गो३। भा२यिह्व२३४औहोवा। ता२३४ राम्(३)॥ १३ *॥ [१७]

॥ आनूपं वाध्र्यश्वम्॥ परायिपरायि। तोपिश्चा३ ताह्व१ता२म्। सोमोयउ। तमा९ह्वा१वा२यिः। दा धा२न्वा९या२ः। नर्य्योअप्सुवन्ता२३रा। सुषावा३सो ३। मा२३मा३। द्रा३४५यिभो६हायि॥(१) सूषासूषा। वसोमा३माद्रा१यिभा२यिः। ह्वषावसो। ममाद्रा१यि भा२यिः। नूना२म्पूना२। नोअविभिःपरिस्रा२३वा। अदाब्धा३ःह्व३। रा२३भा३यि। ता३४५रो६हायि॥(२) अदाअदा। ब्धःसुरा३भायिन्ता१रा२ः। आदब्धःसु।

* ऊ० गा० १५प्र० २ख० १३गा०।

१ २ १ १ १ २ १र
रभायिन्ता१रा२ः। हुते२चायित्वा२। अ१सूमदीमो

१ २ १र २ २ १ ४ २
अन्धा२३सा। ओणान्तो३गो३। भा२३यिहु३। ता

५
३४५रो६हायि(३)॥ १४ *॥ [१८]

३ २ २ ४ ५ २ ३
॥ यौधाजयम्॥ परा३१यि। तो३षि। च। ताम्

५ १ २ १ ३ २ ३
२३४ताम्। सोमा३। यज्ञ२। तमा३४५म्। हा२

५ २ १ २र १ २ १र ३ २
३४वो:। दधान्वा१यः। न। र्य्यीआ२। पसुवा३४५।

३ ५ २ १ ३ २ ३
ता२३४रा। सुषा२। वासो२। ममा३४५। द्रा२३४

५ ३ २ २ ४ ५ २ ३ ५
यिभोः॥(१) सुषा३१। वा३सो। मम्। आद्रा२३४यिभायिः।

१ २ १ २ २ ३ ५ १र १ २
हुषा३। वसो२। ममा३४५। द्रा२३४यिभोः। नूनापु

१ २ १ ३ २ ३ ५
ना। नः। अविभा२यिः। परा३४५यि। स्वा२३४वा।

२ १ ३ २ ३ ५
अदा२। ध्याःहु२। रभा३४५यि। ता२३४राः॥(२)

३ २ २ ५ ५ २ ३ ५ १ २
अदा३१। ध्या३ःसू। र। भिन्ता२३४राः। आदा३।

* ऊ० गा० १५प्र० २ख० १४सा०।

१ ३ २ ३ ५ २ १ २ १
ब्धःह्व२। रभा३४५यि। ता२३४राः। सुतायिचित्त्वा।
२ १ ३र २ ३ ५ २र
अ। प्सुमदा२। मोआ३४५। धा२३४सा। ओणा२।
१ ३ २ ३ ५
तोगो२। भिह्व३४५। ता२३४राम् (३) ॥ ५ * ॥ [१९]

५ र २ ४ ५ ४र ५ १ र २
॥ दैगतम् ॥ परीतो३षिञ्चतासुताम्। सोमोयउ।
१ २ ३ २ १ २ २ १र
तमा२ंह्वा१वा२यिः। दधा३। हौ३हो३वा। न्वा२ं
र र ० १ १ ३ ५र र
योनर्य्योअप्स्वअन्तारा२। सुषा२३। वा२सो२३४औहो,
२ १ ३ १ १ १ १ ५ र २ ४र ५
वा। ए३। ममा२द्रिभा२३४५यिः ॥(१) सुषावा३सोम,
४ ५ १ र २ र १ २ ३र २
मद्रिभायिः। ह्वषावमो। ममाद्रा१यिभा२यिः। नूना
५ २ २ १ र र ० १
२म्। हौ३हो३वा। पुनानोअविभिःपारिस्रावा२। अ
१ ३ ५र र २ १ ३
दा२३। ब्धा२ःसू२३४औहोवा। ए३। रभा२यिन्तरा
१ १ १ १ ५ २ ४ ५ ४ ५ १ २
२३४५ः ॥(२) अदब्धा३ःसुरभिन्तराः। आदब्धःसू। र
१ २ ३ २ ५ २ २ १ र
भायिन्ता१रा२ः। सुता३यि। हौ३हो३वा। चित्त्वा

* ऊ० गा० २६प्र० १अ० ५सा०।

र ७ १र १ १ १र

समदामोअन्धासा२ । ओणा२३ । तो२गो२३४औ

र २ २ ३ १ १ १ १ १

होवा । ए३ । भिष्ट२त्तरा२३४५म्(३) ॥ ६ * ॥ [२०]

२र र १र २ १र २ १ऽ १

॥ कण्वरथन्तरम् ॥ पारीतोषिञ्चतासुताम् । सो

१र ऽ २ १ २ २ २ र र

मोयऊ । ता३मा(२)होइ३वायिः । दधन्वा(२)योनर्य्योअप्सु

३ ३र २ १र ५ २

वन्तरा२३४ऐही । सुषावा२३४सो । ममा३१उवा२३ ।

२ २ ३ २ र र १ २र १ २ १ २ १र र

ए३ । द्रिभिरा ॥(१) सुषावसोममद्रिभायिः । सुषावसो ।

२ १ २ २ र र र ३

मा३माद्रा३यिभायिः । नूनम्पुनानोअविभिःपरिस्रवा२३

५र २ १ ५ २ २

४ऐषी । अदब्धा२३४ःसु । सू । रभा३१उवा२३ । ए३ ।

२ ३ २ र १ २ १ २ २ २ १ २

तरआ ॥(२) आदब्धःसुरभिन्तराः । अदब्धःसु । रा३

१ २ २ र र र र ३ ५र

भायिन्ता३राः । सुतेचित्त्वाप्सुमदामोअन्धसा२३४ऐही ।

२र १ ५ २ १ २ २ ३ २

ओण्तो२३४गो । भिष्ट३आउवा२३ । ए३ । तरमा(३)

॥ १८ † ॥ [२२]

---

* ऊ० गा० १६प्र० १ख० ६सा० ।

† ऊ० गा० १९प्र० १ख० १८सा० ।

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा।

१ २ ३ १ २ २ ३उ ३ २ ३
असाविसोमोअरुषोवृषाहरी

१ २ ३ २ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत्।

२ २उ ३ १ २ ३ १ २ ३ १र
पुनानोवारमत्येष्यव्ययꣳश्येनो

२र ३ १ २ ३ १ २
नयोनिंघृतवन्तमासदत्॥ १ *॥

"सोमः" "असावि" अभिषुतोऽभूत्। कीदृशः सोमः? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्व-रस-निर्मोक-समये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति॥

"अत्येषि"-"पर्येति"—इति पाठौ, "आसदन्"-"आसदम्"—इति च॥ १॥

---

* ऋ० आ० ६, २, २, ९ (२भा० १९१ पृ०) = ऋ० वे० ७, ३, ७, १।

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ १ २ ३
पर्जन्यःपितामहिषस्यपर्णिनो

१ २ ३ २ ३ २ ३ १ २
नाभापृथिव्यागिरिषुक्षयन्दधे।

१ २ ३ १ २ ३ १उ ३ १ २ ३
स्वसारआपोअभिगाउदासर

२र २र ३ १ २ ३ २
न्त्सङ्ग्रावभिर्वसतेवीतेअध्वरे॥ २ *॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरि-सम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आशिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"-"उतासरन्"—इति पाठौ, "वीते"-"वीथे"—इति च॥ २॥

---

* ऋ० वे० ७, ३, ७, २।

† 'पृथिव्याः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु भ्रातृरूपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।

अथ तृतीया ।

५ १ २ ३ १२ २२ ३ १ २ ३
कविर्वेधस्यापर्य्येषिमाहिन

२ ३ १ २ २ ३ १ ३२
मत्योनमृष्टोअभिवाजमर्षसि ।

३ १२ ३ १ २
अपसेधन्दुरितासोममनोमृड

३ १२ २२ ३ १ २ ३ १ २
घृतावसानःपरियासिनिर्णिजम् ॥ ३ * ॥ १३

हे "सोम !" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" मंहनीयं पवित्रं "पर्य्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्योन" † अश्व इव "वाजं" सङ्ग्रामम् ‡ "अभ्यर्षसि" । सोम ! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि । किन्तत् ? "निर्णिजम्" पवित्रम् ॥

"सोमनोमृडघृता"-"सोममृडयघृतम्"—इति पाठौ ॥३॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

नवमः खण्डः ॥ ९ ॥

---

* ऋ० वे० ७, १, ७, १ ।

† 'अत्यः—अतीत्य गच्छति'—इति वि० ।

‡ 'वाजम्—अन्नं चरु-पुरोडाशादिलक्षणम्'—इति वि० ।

¶ 'अपसेधन्—एष इन्द्रो (भ्रा० भा०) अप्सुभिः स्रुत संवर्द्धति'—इति वि० ।

१र र २ र र
॥ महासामराजम् ॥ हाउहोवाइहायि । असावि

ऽ१ २ ४ १र २११११ १र र
सोमो३आ । रुषोइवाइ । षाहरा२३४५यिः । राजेव

र ऽ १ २ ४ २ ३११११ २ र
दस्मो३आ । भिगा३ । आ३ । चिक्रदा२३४५त् । पुना

र र ऽ १ २ ४ २ ११११ १र
नोवारा३मा । जिया३यिषो३ । अव्यया२३४५म् । श्ये

र र १ २ ४ २र २
नोनयोनी३घा । तवा३न्ता३म् । आसदा३दाउ ॥(१)

२ २ऽ१ २ ४ २ ३ १ १ १ १
पर्ज्जन्यःपिता३मा । हिषा३स्या३ । पर्णिना २ ३ ४ ५ः ।

२र र र ऽ १ र ४ २ ११११
नाभापृथिव्या३गायि । रिषू३त्ता३ । यन्दधा२३४५यि ।

१ र र र १ र ४ २र ३११११
स्वसारआयो३आ । भिगा३ऊ३त् । आसरा२३४५न् ।

२ र १ २र ४ २
सङ्गावभिर्वा३मा । तेवा३यिते३ । अध्वरा३२उ ॥(२)

र र ऽ१ २ ४ २र ११११ २ र
कविर्वेधस्या३पा । रियाइयिषो३माहिना२३४५म् । अत्यो

र ऽ १ २ ४ २ ३११११ रर
नम्रष्टो३आ । भिवा३जा३म् । अर्षसा२३४५यि । अप

१ २र ४ २र ३११११ २र
सधन्दू३रायि । तासो३मा३ । नोम्डा२३४५ । हाउ

द्योवा३द्याथि । घृतावसाना३:पा । रिया३सी३ । नि

णिंजा३मा उवा२३४५(३) ॥ ८ * ॥ [१]

॥ द्विरभ्यासालौशम् ॥ असाविसोमोअरुषोवृषाहृ

षा । हरायिः । हरा२३४यिः । राजे३१२३४ । वदस्मो

अभिगाअचि । क्रदात्क्रदात् । पुना३१२३४ । नोवार

मत्येष्य । व्ययांव्ययाम् । श्येनो३१२३४ । नयोनिङ्घृत

व । तमा३सा५दा६५ईत् ॥(१) पर्ज्जन्यःपितामहिषस्य

प । णिंना२३४५: । नाभा३१२३४ । पृथिव्यागिरिषुक्षयम् ।

दधायिदधायि । स्वसा३१२३४ । रआपोअगाउदा । स

रान्सरान् । सङ्गा३१२३४ । वभिर्वसतेवो । तेआ३ध्वा

५रा६५ईयि ॥(२) कविर्वेधस्यापरियेषिमा । ह्निनाम् ।

ह्निना२३४५म् । अत्यो३१२३४ । नमृष्टोअभिवाजम ।

* ऊ० गा० ५प्र० २अ० ८सा० ।

१ २ १ २ ३ २ २र र र
षमायिषमायि। अपा३१२३४। सेधन्दुरितासोमनः।
१ २ १ २ ३ २ २र २ ३ २
मृडामृडा। घृता३१२३४। वसानःपरिया। मिना३
४
यिर्णा५यिजा६५६म् (७) ॥ २ * ॥ [२]

२ र १ २र १
॥ ऐडमायास्यम्॥ असावायिसो२३। सोअक्षा२
२ २ र २र र १ २र २
३ः। ए३। वृषाहरिरे३। राजेवादा२३। स्मोअभा
२ २ २ र १ २ १
यिगा२३ः। ए३। अचिक्रदढे३। पुनानोवा२३। रमता
२ २ २र र १ २
यिये२३। ए३। षिअव्ययमे३। श्येनोनायो२३। नि
१ २ २ र २ १
ङ्क्तावा२३। ए३। तमासददे३४३॥(१) पर्ज्जन्याःपार
२र १ २ २ २र र
३यि। तामहायिषा२३। ए३। स्यपर्णिनए३। नाभा
१ २र १ २
पार्था२३यि। व्यागिरायिषू२३। ए३। चयन्दधए३।
१ र १ २र १ २ २ र
स्वसाराआ२३। पोअभायिगा२३ः। ए३। उदासरन्ने
२ र ३ १ १ २
३। सङ्गावाभा२३यिः। वसतायिवा२३यि। ए३। पी

* ऊ० गा० ८प्र० १ख० २सा०।

अभायिगा२३:। ए३। उदासरन्ने३। सङ्कावाभा२३
यि:। वसतायिवा२३यि। ए३। तेअध्वरए३४३ ॥(२)
कविर्वायिधा२३। स्यापरायिये२३। ए३। पिमाहिन
मे३। अत्योनामा२३। ष्टोअभायिवा२३। ए३। ज
मर्षसिए३। अपसायिधा२३न्। दुरितासा२३। ए३।
मनोमृडए३। घृतावासा२३। नःपरायिया२३। ए३।
सिनिर्णिजमे३४३। ओ२३४५ई। डा(३) ॥ ४ * ॥ [३]

॥ वासिष्ठम् ॥ त्वायि। उद्भवायि। असा३४औहो
वा। विसो। मो३अरू। षोवृषाच्छरायिः। राजे३४
औहोवा। वदा। स्मो३अभि। गाअचिक्रदात्। पुना
३४औहोवा। नोवा। रा३मति। एषिअव्ययाम्। श्ये
नो३४औहोवा। नयो। निघृत। व। तमा३सा५दाई ५

* ऊ० गा० १७प्र० २ख० ४सा०।

इत्॥(१) पर्ज्जा३४औहोवा। न्यःपायि। ता ३ महि। धस्यपर्णिनाः। नाभा३४औहोवा। पृथायि। व्या३गि रि। पुषयन्दधायि। स्वसा३४औहोवा। रआ। पो ३अभि। गाउदासरान्। सङ्गा३४औहोवा। वभायिः। वसते। वौ। तेआ३ध्वा५रा६५६यि॥(२) कवा३४औहो वा। वेधा। स्या३परि। पृषिमाहिनाम्। अत्यो ३ ४ औहोवा। नमा। ष्टो३अभि। वाजमर्षसायि। अषा ३४औहोवा। सेधान्। दुरिता। सोमनोमृडा। हा यि। उऊवायि। घृता३४औहोवा। वसा। नःपरि। या। सिना३यिर्णा५यिजा६५६म्(३)॥ १७*॥ [४]

॥ सौमानांनिषेधम्॥ असो। वाहायि। वायि सोमोअरुषो। वृषाहारा रयिः। राजेवदस्मोअभिगाः।

---

* ऊ० गा० २३प्र० २ख० १७सं०।

२ १ १ २ १ २ ३ ४र
अचिक्रादा२३त्। पू२३ना। नो२३वा३४। रमतिये
५ २ २ १ २ १ २ ३
षिञ्ज। व्या३याम्। श्या२३यिनो। ना२३यो३४। नि
४५ ३२ ४ २ १ २
ह्नुतवं। नमा३सा५दा६५६त्॥(१) पञ्जा। वाच्चायि।
१ र २ १ १ र र
न्याःपितामहिषा। सुपर्णायिना२ः। नाभापृथिव्यागि
२ १ १ २ १ २
रिषू। सयन्दाधा२३यि। स्वा२३सा। रा२३आ३४
३र४ ३ ४र ५र २ २ १ २ १ २
पोऽभिगाउद्वा। सा३रान्। सा२३या। वा२३भा३४
३ ४र५र ३र २ ४ २ १
यिः। वसतेवो। तेआ३ध्वा५रा६५६यि॥(२) कवो।
२ १ र २ र १
वाच्चायि। वायिधस्यापरियायि। षिमाच्चायिना२म्।
१ र र २ १ १ २
आत्योंनम्हष्टोऽभिवा। जमर्षासा२३यि। आ२३पा।
१ ०२ ३४र र ५ २ २ १
सा२३यिधा३४न्। दुरितासोमनः। मा३र्डा। घा२३
२ १ २ ३ ४ ५र ३ २ ४
र्मा। वा२३सा३४। नःपरिया। सिना३यिर्णा५यिजा
६५६(३)॥ २० *॥ [५] १३

---

* ऊ० गा० २३प्र० २ ख० २०मा०।

अथ दशमे खण्डे—

प्रगाथात्मके प्रथम-सूक्ते,

प्रथमा।

१ २   ३ २ ३ १र   २र
आयन्तइवसूर्य्यं विश्वेदिन्द्रस्यभक्षत।
१ २  २ १र  २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातेजनिमान्योजसाप्रतिभागन्नदीधिमः॥ १*॥

हे अस्मदीया जनाः! "आयन्त इव" सूर्य्यं यथा समाश्रिता रश्मयः सूर्य्यं भजन्ते, तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत। "वसुजातः" प्रादुर्भूत इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पितुः भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम॥

"जातोजनिमानि"-"जातेजनिमानि"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २   ३ १र २र  ३ १र २र ३ १ २
अलर्षि†रातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः।
१ २ ३ १ २  ३ १र  २र ३ १ २ ३ १ २ ३ १ २
योअस्यकामंविधतोनरोषतिमनोदानायचोदयन्॥२‡॥ १४

हे स्तोतः! "अलर्षिरातिम्" अपापक-दानम् अपापिष्ठस्य दातारइत्यर्थः [अलर्षि-पद-समानार्थमनर्श-पदं यास्केन व्याख्या-

* छ० आ० ३, १, ३, ५ (२भा० ५५१ पृ०) = ऋ० वे० ७, ३, ३, ४।

† "अलऋषि"—इति क० पु० पाठः।

‡ ऋ० वे० ७. ७. ३. ४।

तम्—"अनर्शरातिमनश्लील-दानमश्लीलं पापकम्"-इति (निरु० नै० ६,२३ ) ] "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि"* यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि महदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्ट-प्रदानाय "चोदयन्" प्रेरयन् "विधतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः ॥

"अलर्षिरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः ; "योअस्य"-"सोअस्य"—इति च ॥ २ ॥ १४

२र २ १
॥ आयन्तीयम् ॥ आयन्तइवसू१रायाम् । विश्वा२
१ १ १ २ २ २ १र
यिदिद्रा२ । स्वभा२क्ताना । वामूनिजातांजनिमा । नि
१ २ १ २र १ १ २ १र
योजा१सा२ । प्रतिभागन्नदी२घिमः । प्रा२३नी । भा
२ २ १ ३ २ १ ५ २
गान्ना३दा । ऊम् । धिमा३ः । ओ२३४वा ॥(१) प्रति
र २ १ १र १
भागन्नदा१यिधायिमाः । प्रता२यि । भागा२म् । न
१ २ र १ २ र १ २
दा२यिधायिमाः । आक्षर्षिरातिम्बसदाम् । उपास्त्व१

* 'उपस्तुहि—समीपे स्थित्वा स्तुहि'—इति वि० ।

२ १र २ र १ २ १ २ १ १
हायि। भद्राइन्द्रस्यरातयः। भा२३द्राः। इन्द्रास्या३

२ १ ३ २ १ ५ २ र
रा। ऊम्। तया३ः। ओ२३४वा॥(२) भद्राइन्द्रस्य

२ १ १ १ १
रा१तायाः। भद्रा२इन्द्रा२। स्यरा२तायाः। याञ्च

२ र १ २ १ २ ११ र १र र २ र १
स्यकामम्विधतः। नरोषा१ता२रयि। मनोदानायचोद

२ १ २ १र २ २ १ ३ २
यन्। मा२३नाः। दानाया३चो। ऊम्। दया३।

१ ५ ३ १ १ १ १
ओ२३४वा। हो२३४५(३)॥ ८ *॥ [१]

२र २र १ २ १
॥ निषेधम ॥ आयन्तइवा३सूरियाम्। विश्वायिन्द्रा।

२ १ १ २ १ १ ४ ५ २ ३
स्यभक्ता२। इहा३। वासू३नायिजा। हाहौ२३४

५ १ २ १ २ र १ २ १ २ १ २
हा। तोजनिमा। नियोजा२३सा। इहा३। प्राता

४ ५ २ ३ ५ ३ २ ४
३यिभागाम्। हाहो२३४हा। नदा३यिधा५यिमा६५

३ १ १ १ १
६ः। हो२३४५(३)॥ २ †॥ [२] १४

---

* ऊ० गा० ५प्र० २अ० ८सा०।

† ऊ० गा० १प्र० २अ० २सा०।

अथ प्रगाथात्मके द्वितीय-सूक्ते--

प्रथमा।

१२ ३१२ ३१२ ३ १२
यतइन्द्रभयामहेततोनोअभयङ्कृधि।

१र २ २उ ३१२१ २३२उ ३१र २र
मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि॥१*॥

हे "इन्द्र!" "यतः" हिंसकान् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "कृधि" कुरु। हे "मघवन्" धनवन्निन्द्र! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्त्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि; "वि मृधः" अस्मद्धिंसकान् विजहि॥

"ऊतये"-"ऊतिभिः"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३१२ ३२उ ३१ २ ३२
त्वंहिराधसस्पतेराधसोमहःक्षयस्यासिविधर्त्ता।

१२ ३१२ ३१२
तन्त्वावयम्मघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे॥२†॥१५

हे "राधसस्पते" धनस्य स्वामिन्! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च‡

* ऋ० भा० ३, २, ४, २ (१भा० ४६४ पृ०) = ऋ० वे० ६, ४, ३०, ३।

† ऋ० वे० ६, ४, ३०, ४।

‡ 'क्षयो निवासः, तस्य'—इति वि०।

"विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय ! "मघवन्" धनवन्निन्द्र ! "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत-सोमाः "हवामहे" आह्वयामः ।

"राधसस्पते"-"राधस्पते"—इति पाठौ, "विधर्त्ता"-"विधर्त्ते"—इति च ॥ २ ॥ १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य दशमः खण्डः * ॥ १० ॥

॥ समन्तम् ॥ यतइन्द्रभयामहायि। ततोनोआभ यङ्कृधायि। मघवा२३क्ता। ग्धायितवनत्। नऊताया। औहो३४वाहायि। वि। द्वायिषो२३वी३। होवा३हा ३हायि। मृधोजा१२३हा३४३यि ॥(१) विद्विषोविमृधोज हायि। विद्विषोवायिमृधोजहायि। तुवꣳहा२३यिरा। धमोमाहा। औहो३४वाहायिह। यास्या२३सी३।

* 'उक्तो माध्यन्दिनः पवमानः नवमस्तृचः। वामदेव्यं मैत्रावरुणं साम, आयन्तीयं अच्छावाकसाम, गायत मच्छावाकं साम च'—इति वि०।

होवा३हायि। विधा२३र्त्ता३४३॥(१) त्वयस्यासोविधर्त्ता।
तन्वावा२३याम। माघवन्नि। द्रगायिर्त्राणा। औहो
३४वाहायि। सु। तावा२३न्ना२। हावा३हायि। ह
वामा२३हा३४३यि। ओ२३४५ई। डा(३)॥ १०* ॥ [१] १५

अथैकादश-खण्डे †—

त्वंसोमेति-तृचात्मकं प्रथमं सूक्तम्‡,

तत्र प्रथमा।

त्वꣳसोमासिधारयुर्मन्द्र ओजिष्ठो अध्वरे।
पवस्व मꣳहयद्रयिः॥ १¶ ॥

हे "सोम!" अभिषूयमाण-पवमान! "मन्द्रः"* मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसा-रहिते ऽस्मदीये यज्ञे "धारयुः" अभिषव-धारा-कामः "असि" भवसि।

---

* ऊ० गा० ५प्र० २अ० १०सा०।

† 'इदानीमाभवः पवमानः'—इति वि०।

‡ 'त्वं सोमासि धारयुरिति अयमुक्त प्रभृतीनि सामानि अमुष्णोक्तार्षाणि'—इति वि०।

¶ ऋ० वे० ७, २, १२ १।

ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमान-धनः सन्* "पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव [ यद्वा, "धारयुः" तदर्थं भाष्यत इति मत्वर्थीयो युस् ]। हे सोम! त्वं धारावानसि ततः पवस्वेति सम्बन्धः ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ १ १ ३ १ २ ३ १ १
त्वꣳसुतोमदिन्तमोदधन्वान्मत्सरिन्तमः।
१ १ २ १र २र
इन्दुःसत्राजिदस्तृतः ॥ २† ॥

हे सोम! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन मदयुक्तोऽसि। कीदृशस्त्वम्? "दधन्वान्" यज्ञस्य धारकः, "मत्सरिन्तमः" अतिशयेन मदकारी,‡ "इन्दुः" दीप्तः, "सत्राजित्" बहूनां जेता,¶ "अस्तृतः" केनाप्यहिंसितः ॥

"मदिन्तमः"-"नृमादनः"—इति पाठौ, "इन्दुःसत्राजिद-स्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च ॥ २ ॥

अथ तृतीया।

१ १ २ १र २र ३क२र ३ १ २
त्वꣳसुष्वाणोअद्रिभिरभ्यर्षकनिक्रदत्।
१ २ ३ २ ३ १ २
द्युमन्तꣳशुष्ममाभर ॥ ३ § ॥ १६

* 'यद्यपि मंहतिः पूजार्थः तथाप्यत्र लाभार्थो द्रष्टव्यः'—इति वि०।

† ऋ० वे० ७, २, १३, २।

‡ 'मत्सरिन्तमः—भक्षणीयतमः—इति वि०।

¶ 'सत्राजित्—सदा जेता अथवा सहजेता'—इति वि०।

§ ऋ० वे० ७, २, १३, ३।

हे "पवमान" सोम! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुन्वानः अभिषूयमाणस्त्वं "कनिक्रदत्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोधकं बलं वा "आभर"* ॥

"आभर"-"उत्तमम्"—इति पाठौ ॥ ३ ॥ १६

॥ आश्वसूक्तम् ॥ आऔहोवाहायि। तुव७सोमा। सिधा। रयुः। ऐहीयैहोऽ। मान्द्रओजिष्ठोआध्वरे। ऐहीयैहोऽ। आ२यि। पावा२स्वामा२। हयत्। रा२या२३४औहोवा॥(१) आऔहोवाहायि। तुव७सु ताः। मदायि। तमः। ऐहीयैहोऽ। दाधन्वान्मत्स रायिन्तमः। ऐहीयैहोऽ। आ२यि। आयिन्दू२:सा त्रा२। जिट। स्ता२त्ता२३४औहोवा॥(२) आऔ होवाहायि। तुव७सुषा। णोआ। द्रिभिः। ऐहीयै होऽ। आभियर्षकनायिक्रदत्। ऐहीयैहोऽ। आ२

* स्वर्विदमिति प्रतीक-ग्रहणं स्वर्गस्य वेत्तारमिति तद्व्याख्यानञ्च विवरणे प्रामादिक इव उपलक्ष्यते।

१ १ १र ३ ५र र
यि। द्यूमा२न्नाम्रू२। अमा। भा२रा२३४औहोवा।
२ १ र २ ३ १ १ १ १
म्रुक्आऊता२३४५:(३) ॥ ११* ॥ [१]

३ ४ ५र र र २ ३ ५
॥ आम्मदम्॥ तुव७सोमासिऐ। होऐहो२३४या।
१र १ ५ १ २ र १
धारयुरै२होइया। मन्द्रओजिष्ठोअध्वरऐ२होऐ२हो३
२ १ २ २ १ ५ ४
या। प्रावाखामा३१२३। हयो२३४वा। रा५यो६हा
३ ४ ५ र र २ ३ ५ १
यि ॥(१) तुव७सुतोमऐ। होऐहो२३४या। दिन्तमऐ
१ ५ २ २ र १ ५ २
२होऐ२हो३या। दधन्वान्मत्सरिन्तमऐ२होऐ२हो३या।
१ २ २ १ ५ ४ ५
आयिन्दुःसात्रा३१२३। जिदो२३४वा। सा५त्रोई६हा
३ ४ ५ र र २ ३ ५ १
यि ॥(२) तुव७सुषाणऐ। होऐहो२३४या। अद्रिभि
१ २ १ १ ५ २
रै२होऐ२हो३या। अभियर्षकनिक्रदरै२होऐ२हो३या।
१ २ २ १ ५ ४ ५
द्यूमान्ना७म्रू३१२३। अमो२३४वा। भा५रो६हा
वि(३)॥ १२† ॥ [२]

* ऊ० गा० ५प्र० २अ० ११सा०।
† ऊ० गा० ५प्र० २अ० १२सा०।

२१ ४र र ५
॥ द्वावसुनिधनेम् ॥ तुव꣡सो२३मासिधारयुर्हाउ।
१ २र र १ २ १ २ २ १
मान्द्रओजि। ष्ठोआध्वा१रा२३यि। होवा३हायि। प
२ १ २ २ १ ३ ५र
वास्व१मा२३। होवा३हा। हयत्। रा२या२३४औ
र २१ ४र र ५ १ २र
होवा॥(१) तुव꣡सू२३नोमदिन्तमोहाउ। दधन्वान्मत्स
१ २ १ २ २ १ २
रायिन्ता१मा२३ः। होवा३हायि। इन्दूःसा१त्रा२३।
१ २ २ १ ३ ५र र २
होवा३हा। जिद। स्तारत्ता१२३४औओहोवा॥(२) तु
१ ४र र ५ १ २ १ २
व꣡सू२३ष्वाणोअद्रिभिर्हाउ। अभियर्ष। कनायिक्रा१
१ २ २ १ २ १ २
दा२३तु। होवा३हायि। द्युमान्ता१꣡शू२३। होवा
२ १र ३ ५र र २ २र १
३हा। दमना। भा२रा२३४औहोवा। ए३। द्वाव
२११११
सू२३४५(३)॥ १३* ॥ [३]

१ र २र १
॥ प्रतीचीनेडङ्काग्नीतम् ॥ त्व꣡सोमासि। धा२रयूः।
२र र १ ७ २र २ १
मान्द्रओजि। ष्ठोआध्वरा२३४यि। हाहोयि। पवस्व

* ऊ० गा० ५.प्र० २ख० १२सा०।

माꣳहा३यात् । रयायिः । औ२३होवा ॥(१) त्वꣳसु
तोम । दा२यिन्तमाः । दाधन्वान्म । त्सरायिन्तमा२
३४ः । हाहोयि । इन्दुःसत्राजी३दा । स्तुता । औ३
होवा ॥(२) त्वꣳसुष्वाणः । आ२द्रिभायिः । आभियर्षी
कनायिक्रदा२३४त् । हाहोयि । द्युमन्तꣳशूष्मा३मा ।
भरा । औ३होवा । ई३डा(३) ॥ १४* ॥ [४]

॥ हाविष्कृतम् ॥ त्वꣳसोमासिधाहाउरायूः । मन्द्र
ओजायि । ष्ठोआध्वा२३रायि । पवा२हो१ । स्वा२३
मा । हयत् । रा२या२३४औहोवा ॥(१) त्वꣳसुतोम
दाहाउतामाः । दधन्वान्मा । त्सरिन्ता२३मा: । इन्दू
२र्हो१यि । सा२३त्रा । जिद्द । स्ता२र्त्ता२३४औहो
वा ॥(२) त्वꣳसुष्वाणआहाउद्रायिभायिः । अभियर्षा ।

* ऊ० गा० ५प्र० २अ० १४गा० ।

२ २ १र
कनिक्रा२३दात्। द्युमा२द्यौ१। ता२३४ष्मू। यमा।
२ ५र ५र २ १ ३ १ १ १ १
भा२रा३३४औहोवा। यविष्कृते२३४५(३) ॥१५*॥[५]१६

अथ त्वचात्मके द्वितीय-सूक्ते

प्रथमा।

१ १ ३ १ २ ३ २ ३ १ २ ३ १ २
पवस्व देववीतय इन्दो धाराभिरोजसा।
२ ३ २ १ २
आ कलशं मधुमान्त्सोम नः सदः॥ १†॥

हे "इन्दो" सोम! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम!" "मधुमान्" मदकर-रसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसद" आसीद [ सदेर्लुङि रूपम् ]॥ १॥

अथ द्वितीया।

१र २ ३ १ २ ३ २ ३ २ ३ १ २
तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः।
२ ३ १ २ ३ १ २ ३ १ २
त्वां देवासो अमृताय कं पपुः॥ २‡॥

---

* ऊ० गा० प्र० २ षा० १५ सा०।

† ऋ० सा० ६, २, ३, ६ (२भा० २१२ पृ०) = ऋ० वे० ७, ५, १०, २।

‡ ऋ० वे० ७, ५, १०, ३।

"उद्प्रुतः" वसतीवर्याख्यमुदकं प्रति, गच्छन्तः* [यद्वा, उदकस्य निर्गमयितारः] "तव" स्वभूताः "द्रप्साः" द्रुतगामिनो रसाः† "मदाय" मदार्थम् इन्द्रम् "वावृधुः" वर्द्धयन्ति । ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं‡ "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥ २ ॥

अथ तृतीया ।

१ २ ३१२ ३२
आनःसुतासइन्दवःपुनानाधावतारयिम् ।
३ १ २ ३ १२
वृष्टिद्यावोरीत्यापःस्वर्विदः ॥ ३¶ ॥ १७

हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" सोमाः पात्रेषु क्षरन्तो वा "रीत्यापः" यैः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्"§ "आ धावत" आगमयत । कीदृशाः ? "वृष्टिद्यावः"‖ वृष्टिमभि द्यौर्यैः क्रियते, वृष्ट्यभिमुख-द्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः** ॥ ३ ॥ १७

---

* 'उद्प्रुतः—उदकेन प्लाविताः'—इति वि० ।

† 'द्रप्साः—द्रव्यभूताः सोमाः'—इति वि० ।

‡ 'कं—आतिभूतम् अथवा कम् उदकभूतम्—इति वि० ।

¶ ऋ० वे० ७, ५, १०, ४ ।

§ 'रयिं—सोमाख्यं धनम्'—इति वि० ।

‖ 'वृष्टिद्यावोरीत्यापः—यथा द्युलोके भवान् वृष्टिः रीतिभिः सङ्गतः'—इत्यादि वि० ।

** 'स्वर्विदः—स्वर्गस्य वेत्तारः'—इति वि० ।

२ र र १ १ २र
॥ वैश्वमनसम्॥ पवस्वदेववीता३यायि। आयिन्दो

१र ३ र १ र२१ २१ २र ३ ११११
धारा२। भिरो३४५। जसआकलशम्मधुमान्त्सो२३४५।

१ १ ३ ५रर २ र
मना२ः। सादा२आ२३४औहोवा॥(१) तवद्रप्सोउदप्रु

२ १ २ १ ३ १ १ रर २र १र
३ताः। आयिन्द्रम्मदा२। यवा३४५। वृधुराल्वान्देवा

२र १ ३११११ १ १ ३ ५रर
सोअमृता२३४५। यका२म्। पापूररा२३४औहोवा॥(२)

२ र २ १२र १र ३२ १
आनःसुतासइन्दा३वाः। पूमानाधा२। वता३४५। रयि

र२१ र२र र र३ ११११ १ ३
मावृष्टिद्यावारीत्यापार३४५ः। सुवा२ः। वोयिदार२आर

५रर ३११११
आर३४औहोवा। ऊर२३४५(३)॥१७*॥ [१]

२ २ १ २ र १
॥ सुज्ञानम्॥ पवस्वदा। ववीतयायि। इन्दोधा

र १ २र १
रा२। भिरोजसा। आकलाशा२म्। मधु। मा२

३ ५रर १ २ १
न्त्सो२३४औहोवा। मनःसद२३॥(१) तवद्रप्साः। उद

१ २ १ २ १ २र १ र
प्रुताः। इन्द्रम्मादा२यिवावृधः। तुवान्दायिवा२। मा

* ऊ० गा० ५प्र० २अ० १७सा०।

१　　२　५२र　　१　२　　२र
अ। मा२र्मा२३४औहोवा। तकम्यपुरे३ ॥(२) आनः

१　　१२१　　　र१
सुता। सइन्दवाः। पुनानाधा२। वतारयायिथिम्।

२　१　　२१　　२　५र र　　१　२
वृष्टिद्यावा२ः। रीति। आ२पा२३४औहोवा। सुवर्वि

१　१११
दए३उपा२३४५(३) ॥ १८* ॥ [२] १७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा।

१२१　१२१र　२र२११　२१२
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण।

२२२उ　२　१उ　११२　२१र　२र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ १† ॥

"हर्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

---

* ऊ० गा० ११प्र० २अ० १८गा०।

† छ० आ० ६, २, १, ८ (१२भा० १६०पृ०) = पुनरिदैव ८, २, ८, ३ = ऋ० वे० ७, ४, २४, १।

अथ द्वितीया।

२उ ३ १ २ ३ १२ ३ १ २
द्विर्यम्पञ्चस्वयशसꣳसखायोअद्रिसꣳहतम्।
'३१र २र ३ २ २ ३ १२ ३ १ २
प्रियमिन्द्रस्यकाम्यम्प्रस्नापयन्तऊर्म्मयः॥ २* ॥

"द्विः पञ्च"† दश-सङ्ख्याकाः "सखायः" समान-ख्याना अङ्गुलयः‡ "स्वयशसं" स्वभूत-यशस्कम्¶ "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्वैः काम्यमानम् "ऊर्मयः" § [द्वितीयैकवचने प्रथमा-बहुवचनम्] ऊर्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति [यद्वा, ऊर्मय इत्यङ्गुलि-विशेषणं प्रभूता इति]; तं सोमं पुनन्तीति पूर्वेण सम्बन्धः॥

"सखायः"-"स्वसारः"—इति पाठौ, "प्रस्नापयन्त ऊर्मयः"-"प्रस्नापयन्त्यूर्मिणम्"—इति च॥ २॥

अथ तृतीया।

१ १ ३ १ २ ३ १र २र
इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।
१ २ ३ १ २ ३ १ २ ३ १ २
नरेचदक्षिणावतेवीरायसदनासदे॥ ३ ॥॥ १८

* ऋ० वे० ७, ४, १२, ६।

† 'द्विः—द्विःकृत्य। यं सोमं। पञ्च ऋत्विजः'—इति वि०।

‡ 'सखायः—ऋत्विजः'—इति वि०।

¶ 'स्वयशसं—स्वयशसा सम्पन्नम्'—इति वि०।

§ 'ऊर्मयः—उदक-सङ्घाताः'—इति वि०।

|| ऋ० वे० ७, ४, १४, ४।

हे "सोम !" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" [ षष्ठ्यर्थे चतुर्थी ] इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा । किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन तद्वते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञ-यज्ञे सीदते,* "नरे"† मनुष्याय यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥

"वीराय"-"देवाय"—इति पाठो ॥ ३ ॥ १८

५ ३ २ ४ ५
॥ गौरीवितम् ‡ ॥ परि । त्यꣳहा३ । यँतꣳहरायिम् ।

१ २ २ १ २ २ २ ४२
बभ्रुम्पुनन्तिवारेणा२ ३ । योदेवान्वा३१२३यि । श्वाꣳ

१२ २ ४ ५ ४
आ५यित्यरायि । मादेनसा३१२३ । हगोवा । क्षा५तो

५ ५ ३ २ ५ १ २
६हायि ॥(१) दियम् । पञ्चा३ । स्वयशमाम् । सखा

२ १ २ ४
योअद्रिसꣳहता२३मं । प्रायमिन्द्रा३१२३ । स्यका५मि

१ २ २ ४ ५ ४ ५
याम् । प्रास्नापया३१२३ । तओवा । मा५योई२३४ ॥(२)

५ २ ३२ ४ २ ५ १ २
इन्द्रा । यसो३ । मपातवायि । वृत्रघ्नेपरिषिच्यसा२३

---

* 'सदनासदे—यानि यज्ञे सदनानि द्रोणकलश-प्रभृतीनि, तेषु आसीदति ।' इति वि० ।

† 'नरे—नराकारे'—इति वि० । ‡ "महागौरीवितम्"—इति ख०-पु०-पाठः

यि। नारेचदा३१२३। श्शिणा५वनायि। वायिरायसा
३१२३। दनोवा। सा५दोईवायि(३)॥ १८* ॥ [१]

॥ निधवम्॥ आयिहौ३। आयिहौ। एहिया।
ओ२३४वा। हायि। परित्य॒हर्यता३॒हारा३यिम्।
हारायिम्। हरा। ओ२३४वा। हायि। बभ्रुम्पुन
न्तिवा३रेणा३। रेणा। रेणा। ओ२३४वा। हायि।
योदेवान्विश्वा॒ईं३त्पारा३यि। परायि। परा। ओ२३
४वा। हायि। मदेनसहगा३च्छाता३यि। च्छानायि।
च्छता। ओ२३४वा। हायि॥(१) दिव्यम्पञ्चसया३
ग्रासा३म्। ग्रासाम्। ग्रसा। ओ२३४वा। हायि।
सखायोअद्रिमा३॒हाता३म्। हाताम्। हता। ओ
२३४वा। हायि। प्रियमिन्द्रस्यका३माया३म्। मा

* ऊ० गा० ५प्र० १ख० १८वा०।

याम् । मिया । ओ२३४वा । हायि । प्रज्ञापयन्तऊ३र्म्मयाः । मया । ओ२३४वा । हायि ॥(२) इन्द्रायसोमपा३तावा३यि । तावायि । तवा । ओ२३४वा । हायि । वृत्रघ्ने परिषो३च्यासा३यि । च्यासायि । च्यसा । ओ२३४वा । हायि । नरेचदक्षिणा३वाता३यि । वाता यि । वता । ओ२३४वा । हायि । वीरायसदना३सादा३यि । सादायि । सदा । ओ२३४वा । हायि । आयिही३ । आयिही । एहिया । ओ२३४वा । हा३४ । औहोवा । ई२३४५(३) ॥ १८* ॥ [२]

॥ यद्वाहिष्ठीयम् ॥ परित्यꣳहर्य्यतꣳहरिम् । परित्यꣳहोवा । यंतꣳहरायिम् । बभ्रुम्पूर३ना । तिवारेणा । यीदेवा२३न्वायि । आꣳहूत्परायि । मदेना२३

* आ० गा० ५प्र० १ख० १८उ० ।

सा। इगच्छा२३ता३४३यि ॥(१) द्वियम्पञ्चस्वयशसम्।
द्वियम्पञ्चोवा। स्वयशसाम्। सखायो२३आ। द्रि
सᳪंहताम्। प्रियमा२३यिन्द्रा। स्यकामियाम्। प्रव्रा
पा२३या। तज्ज्म्भा२३या३४३ः ॥(२) इन्द्रायसोमपात
वे। इन्द्रायसोवा। मपातवायि। वृत्रघ्ना२३यिपा।
रिषिच्यसायि। नरेचा२३दा। क्षिणावतायि। वीरा
या २ ३ सा। दनासा२३दा३४३यि। ओ २ ३ ४ ५ई।
डा(३) ॥ २०* ॥ [३]

॥ आसिताद्यम् ॥ परित्यᳪंहर्य्यताम्। हरायिम्।
बभ्रुम्पुनन्तिवारे२३णा। योदे२वान्वा२यि। श्वाᳪंइ
त्परायि। मादे२नासा२। हगोवा३ओ२३४वा। क्षा
पूतो६हायि ॥(१) द्वियम्पञ्चस्वया। शसाम्। सखायो

* ऊ०गा० ५प्र० २ख० २०सा०।

२ १ १ १र
अद्रिसं२श्वार३तम्। प्राया२मायिन्द्रा२। स्यकामि

१ १ २ १ ५ ४
याम्। प्राश्चा२पाया२। तमोवा३औ२३४वा। मा५

५ १र २र १ र
योऽ६हायि॥(२) इन्द्रायसोमपा। तवायि। वृत्रघ्नेप

२ १ १ १र
रिषिच्या२३सायि। नरा२श्चादा२। चिणावतायि।

१ १ २ १ ५ ४
वायिरा२यासा२। दनोवा३औ२ ३ ४ वा। मा५दो६

५
हायि(३)॥ १*॥ [४]

र १ ४ ५ ६ ५ २ १
॥ साध्रम्॥ परित्या३२हर्य्यतं२हरायिम्। बभ्रू

२ १ ३ २ २ ४ १र २र १र २र
पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वा२

१ २ २ १ १ १ १ १ २ २ १ १ २ २ ५
इत्यरा२३४५यि। मादाऔ२३४वा। नासाऔ२३४वा।

४ ५ २ ४ ५ ४ ५ २ १
चगा५च्छतायि॥(१) दिव्यंप्या३च्चस्वयशसाम्। सखा

१र १ ३ २ ३ ५ १ १ २ १र
यो२ना२। द्रिसा३४५। हा२३४ताम्। प्रियमिन्द्रस्यका

२ १ १ १ १ १ २ ३ ५ १ २ २ ५
मिया२३४५म्। प्राश्चाऔ२३४वा। पायाऔ२३४वा।

---

* ऊ० गा० ५प्र० १ख० १सा०१।

तजुप्रमंयाः ॥(२) इन्द्रायाउसोमपातवायि। वृत्राघ्नेपा

२। रिषा३४५यि। ष्या२३४से। नरेचदक्षिणावता२३

४५यि। वायिराओ२३४वा। यासाओ२३४वा। दना

५सदायि। चो५ई। डा(३) ॥ २* ॥ [५]

॥ वसिष्ठस्याकूपारम् ॥ परित्या२३ऽऽहर्य्य। तऌ

हा२३४रायिम्। बभ्रू२म्पुना। तिवारेणा। येदेवान्वा२

यि। श्वाऽऽइत्परायि। मदेवासा२३। च्छा२३गा३।

च्छा३४५तोईछायि ॥(१) द्विर्यम्पा२३श्चस्व। यशा२३४

साम्। सखा२योचा। द्रिसऽऽहताम्। प्रियमायि

न्द्रा२-। स्यकामियाम्। प्रजापाया२३। ता२३ज३३

मा३४५योईवायि ॥(२) इन्द्राया२३सोम। पाता२३४

वायि। वृत्रा२घ्नेपा। रिषिष्यसायि। नरेचादा२क्षि

* ऊ० गा० ६प्र० १ख० २सा०।

र १ १र र १ १ ४ २
णावताथि । वीरायासा२३ । दा२३ना३ । सा ३ ४ ५
५
दोई हायि(३) ॥ ३* ॥ [६]

३ २ २ ४ ५
॥ श्यावाश्वम् ॥ परा३१यि । त्या३१उह । र्य्यतम् ।
२ ४ ५ १ १र
हा ३ रिम् । एहिया । वा । भ्रुम्युनन्तायि । वा ।
१र १र र र १र २ ४
रेणा२ । एहिया२ । योदेवान्वायिश्वा३१उआ३यित् ।
५ १र १र र १
पा २ ३ ४ रायि । ऐहा२यि । एहिया२ । मदेनस
२ ४ २ ५ ३ २
हा३गा३ । च्छा ३ ४ ५ तो ६ हायि ॥(१) दिर्य्या३१ म् ।
२ ४ ५ २ ४ ५ १ र र
पा३च्च । स्वय । ग्रा३सम् । एहिया । सा । स्वायोभद्रा
२ १ १र १ २ ४
यि । स । हता२म् । एहिया२ । प्रियमिन्द्रास्या३का
५ १र १र र १
३ । मा२३४याम् । ऐहा२यि । एहिया२ । गन्धाप
२ ४ २ ५ ३ २ २
यान्ता३ज । मा३४५योई हायि ॥(२) इन्द्रा ३ १ । या३
४र ५र २ ४र ५ १ र २
सो । मपा । ता३वे । एहिया । वा । चवूपरायि । षि ।

---

* ऊ० गा० ६प्र० १ख० ३सा० ।

१ १र २ १ २ ४
च्यसा२यि । एहिया२ । नरेचदाचा३यिणा३ । वा२

५ २र १र र र १ २ ४
३४तायि । ऐहा२यि । एहिया२ । वीरायसादा३ना

२ ५
३ । सा३४५दो६हायि(३) ॥ १* ॥ [७]

१ २ १
॥ आन्धीगवम् ॥ परित्य०हर्यता१०हारायिम् । ब

२ १ १र र १र १र
भ्रुम्पु । नन्ता२३यिवा । ऊम्मा२१ऽ२ । रेणायोदेवाञ्जि

२र १ २ ३ १ १ १ १ १ २ २ १
श्वा०द्वत्यरा२३४५यि । मादा३उवा । ना२सा । हा२

२ १ २ ४ ५ २
३गा । च्छता । औ३होवा ॥(१) दिव्यम्मञ्चसया१श्वा

२ १ र २ १ १
साम् । सखायः । अद्रा२३यिसा । ऊम्मा२१ऽ२ । हृ

२ १ र ३ १ १ १ १ १ २ २
तप्रियमिन्द्रस्यकामिया२३४५म् । प्राश्वा३उवा । पा२

१ २ १ २ ४ ५ १ र र
या । न्य२३ऊ । मया । औ३होवा ॥(२) इन्द्रायसो

२ १ र २ १
मपा१तावायि । वृत्रघ्ने । परा२३यिषा । ऊम्मा२१ऽ२ ।

१ र र १ १ १र ३ १ १ १ १ १ २
च्यसेनरेचदक्षिणावता२३४५यि । वायिरा३उवा । या२

* अ० गा० १९प्र० २ख० १मा० ।

१ २ १ २ ४ ५ ४
सा। दा२३ना। सदा। औ३होवा। वो५ई।
डा(३) ॥ २* ॥ [८]

१ २ २ २ १
॥ आसिताद्यम् ॥ इन्द्रायसोमपा। तवायि। ॰ वृत्र
२ २ १ १ १२
घे परिषिच्या२३सायि। नारे२चादा२। चिणावता
१ १ २ १ ५ ४
यि। वायिरा२यामा२। दनोवा३ओ२३४वा। सा५
५ २ १२ १ २
दो६हायि ॥(१) तंᳪसखायःपुरू। रुचाम्। वयंयूय
२ २ १ १ १
श्चसूरा२३याः। आश्या२मावा२ जगन्वियाम्। सा
१ १२ १ ५ ४ ५
ने२मावा२। जपोवा३ओ२३४वा। स्ता५योᳬ६हायि ॥(२)
१११ २ १ २
परित्यᳪहर्यताम्। हरायिम्। बभ्रुम्पुनन्तिवारे२३
२ १ १ २ १ १
णा। योदे२वान्वा२यि। स्वाᳪइत्परायि। मादे२ना
१ २ १ ५ ४ ५
सा२। हगोवा३ओ२३४वा। क्का५तो६हायि(३)॥१६†॥[९]

* ऊ० गा० १२प्र० २ख० २गा०।

† ऊ० गा० १४प्र० २ख० १६गा०।

॥ ऐडकौत्सम् ॥ इन्द्राह्वीयार२३। सोमपातवइ्या।
वृत्रघ्ने परिषिच्यसे। नारेचद। च्चिणावार२३तायि। वा
यिरा३ह्वा। यासा३ह्वा। दनासार२३दा३४३यि ॥(१)
तꣳसह्वीखार२३। यःपुरुह्रूचमीया। वयंयूयञ्चमूरयः।
आध्यामवा। जगन्धार२३याम्। सांना३हायि। मावा
३ह्वा। जपस्तार२३या३४३म् ॥(२) परीह्वित्या २ ३म्।
ह्वर्य्यतꣳह्वरिमीया। बभ्रुम्पुनन्तिवारेण। योदेवान्वि।
श्वाꣳइ्त्यार२३रायि। मादा३ह्वायि। नासा३ह्वा। ह्वग
च्छार२३ता३४३यि। ओर२३४५ई। डा(३) ॥ १७* ॥ [१०]
॥ स्रुह्वाम्नुह्वीयाद्यम् ॥ इन्द्रायसोमपातवायि। वृत्र
घ्ने परिषिच्यार२३सायि। नरेचदक्षिणावार२३तायि। वी
रायार२३सा३। दार। नासा३४औहोवा। दार२३४५

* ऊ० गा० १४प्र० २अ० १७सा०।

१ २र १र२१ र २१र २
यि ॥(१) तᳬसखाय:पुरूरुचाम् । वयंयूयञ्चसूरा२३या: ।
१र र२१ २ १र २ १
अश्यामवाजगन्धा२३याम् । सनेमा२३वा३ । जा २ ।
१२ ५र र ३१११११ १२१ २ १
पस्ता३४औहोवा । या२३४५म् ॥(२) परित्यᳬहर्यतᳬ
२१ २१र २ १र२र २र
हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदेवान्विश्वाᳬ
१ २ १र २ १ ३२ ५र
दूत्पा२३रायि । मदेना२३मा३ । हा२ । गच्छा३४औ
र २११११
होवा । ता२३४५यि(३) ॥ १८* ॥ [११]

॥ क्रौञ्चाद्यम् ॥ २र १र २र२र २
इन्द्रायसौहो । मापातवायि । वृ
र १ २ ४ २र१र
त्रघ्नेपा३ । रायिषा३यिच्चा५सा६५६यि । नरेचदौहो ।
१र १र २र र १ २ ४
चोणावतायि । वीरायसा३ । दाना३सा५दा६५६यि ॥(१)
२ १र र २र १र १ र १ २
तᳬसखायौहो । पूरूरुचाम् । वयंयूया३म् । चासूर
४ २ र १ र २र१ २र
रा५या६५६: । अश्यामवौहो । जागन्धियाम् । सन
१ २ ४ २ १ र
मवा३ । जापा३स्ता५या६५६म् ॥(२) परित्यᳬहौहो ।

* ऊ० गा० १४प्र० [illegible] १८सा० ।

२र १ २ १ २ ४
यौतᳬहरायिम्।' बभ्रुगपुना३। नायिवा३रे५णाई५६।
२र र १र र २र १ २ र १ २
योदेवान्वैचौ। स्वाᳬइत्पराथि। मदेनसा३। हागा
४
३च्छा५ताई५६यि(३) ॥ १८* ॥ [१२]
२ र १ २ २ ५
॥ रयिष्ठम्॥ इन्द्रायसो। मपाता३वायि। औ३
२ २ १र २ ३ १११ २ र
हो३वा। वृत्रघ्नेपरिषिच्यसा२३४५यि। वृत्रघ्नेपा। रि
१ २ २ ५ २ २ १र२१ २र ३ ११
षायिच्या३सायि। औ३हो३वा। नरेचदक्षिणावता२३
११ २र १ २ २ ५ २ २
४५यि। नरेचदा। क्षिणावा३तायि। औ३हो३वा।
र१र २ र १ ३ ११११ २र र १ २ २
वीरायसदनासदा२३४५यि। वीरायसा। दनासा३दा
५ २ २ २ र १३२ २
यि। औ३हो३वा॥(१) तᳬसखायाः। पुरूरुचाम्।
५ २ २ १२र १ २र१ ३ ११११ २ र
औ३हो३वा। वयंयूयञ्चसूरया२३४५ः। वयंयूयाम्।
१ २ २ ५ २ २ १ र २१र २ ३ ११
चसूरा३याः। औ३हो३वा। अश्यामवाजगन्धियार३
११ २ र १ २ २ ५ २ २
३५म्। अश्यामवा। जगान्धा३याम्। औ३हो३वा।

* ऊ० गा० १४प्र० २ख० १९गा०।

१र२१र २ ३ १११११ २र १ २ २
सनेमवाजपस्तियार२३४५म् । सनेमवा । जपास्ता३याम् ।
ऽ २ १ २ १ २ २
औ३हो ३ वा ॥(२) परित्यꣳहा । र्यताꣳहा३रायिम् ।
ऽ २ १ १ १ १र२३ १११ २
औ३हो३वा । बभ्रुम्पुनन्तिवारेणार२३४५ । बभ्रुम्पुना ।
१ २ २ ऽ २ २ १र२र१र २र १२ ३११
तिवारे३णा । औ३हो३वा । योदेवान्विश्वाꣳइत्परार२३
११ २र२र र १ २ २ ऽ
४५यि । योदेवान्वायि । श्वाआयित्पा३रायि । औ३
२ २ १र२ १ २ ३११११ २र
हो३वा । मदेनसहगच्छतार२३४५यि । मदेनसा । ह
१ २ २ ऽ २ २ ऽ २ २ ऽ १
गाच्छा३तायि । औ३हो३वा । औ३हो३वा । ई३या ।
ऽ २ ५ २ २
ई३या३४ । हा । हाउवा३ । ऊ३२३४पा(३) ॥२०*॥[१३]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम् ॥ इन्द्राऽ५य । सो३मा३पाता
५ १ र १ १ २ २ १ १
वायि । वार्त्रघ्नपा । री३षायिच्या३सायि । नरे२च ।
२ १ २ २ १ र
दक्षार३यिणा । ऊम्मायि । वा३तायि । वायिरायस
१ २ १ २ १र र र
दनारसदाउ ॥(१) दायिताम् । सखायःपुरूरुचंवयंयू

* ऊ० गा० १४प्र० २ख० २०गा० ।

२ १२ २ १ १ र २
याम्। चा३सूरा३याः। अश्शा२म। वाजा२३गा।
१ २ २ १ र र ९ २
ऊम्मायि। धा३याम्। सानेमवाजपार२स्तियाउ ॥(२)
१ २ १ २ १ २ २
याम्पा। रित्यॐद्वर्य्यंतॐद्वरिम्बभ्रुम्पुना। तो३वारे३णा।
१र १र २ १ २ २
योदे२वान्। विश्वाॐ२३आ। ऊम्मायि। पा३रायि।
१ र २ २
मादेनसद्वगार२च्छताउ(३) ॥ २१* ॥ [१४]

॥ ऊर्द्ध्वत्वाष्ट्रीसाम ॥ परित्यॐद्वर्यंतॐद्वरायिम्। बा
भ्रू२म्पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वाॐ
इत्परा२३४५यि। मदेनसा। द्वगच्छा२३ता३४३यि ॥(१)
दिर्य्यम्पञ्चस्वयशसाम्। साखा२योआ२। द्रिसा३ ४ ५।
हा२३४ताम्। प्रियमिन्द्रस्यकामिया२३४५म्। प्रस्नाप
या। तऊम्मा२३या३४३ः ॥(२) इन्द्रायसोमपातवायि।
वार्त्रा२घ्नेपार। रिषा२३४यि। च्या२३४से। नरेचद

* क० गा० १४प्र० २ख० २१षा०।

२र ३ १११११ ३२र ११ ११र २
त्विणावतार२३४५यि। वीरायसा। दनासार२३दा३४३यि।
१
ओ२३४५ई। डा(३) ॥८*॥[१५]

४ ३ ५ २ ४
॥ यज्ञायज्ञीयम्॥ परा५यित्यम्। हा३र्याश्वन्
५ १ २ १२ २ १र १र
हारायिम्। बाभ्रुम्पुना। तीइवारे३णा। योदे२वान्।
२ १ २ २ १ र
विश्व२३आ। ऊम्मायि। पा३रायि। मादेनसहगा
२ २ १ २ १ र
२च्छताउ॥(१) तायिहायिः। यम्यत्वयम्रसंसखा
र २ १ २ २ १ १
योआ। द्रो३सांहा३ताम्। प्रिया२मि। द्रस्या२३
२ १ २ २ १ र २
का। ऊम्मायि। मा३याम्। प्राखापयन्तऊ२म्म
२ १ २ १र र र र र २
याउ॥(२) याआयि। द्रायसोमपातवेवृत्रघ्रुपा। री३
१ २ २ १ १ २ १
षायिच्या३सायि। नरे२च। दत्ता२३यिणा। ऊम्मा
२ २ १ र ३२ १११
यि। रा३तायि। वायिरायसदनार२सदाउ। वा३४५ (३)
॥ ८† ॥ [१६]

---

* ऊ० गा० १७प्र० १ख० ८सा०।

† ऊ० गा० १७प्र० १ख० ९सा०।

२ १ ४
॥ आसितोत्तरम्॥ परायित्या२३ऌ्हर्य्यतऌ्हरिऌ्

५ १ २ २ १ २ २
ह्वाउ। बभ्रुम्पुनन्तिवारे २ ३ णा। योदेवा३न्वा ३ यि।

१ २ २ ५ १ २ २ २ १ ५
श्वाऌ्इत्पार२३४रायि। मदेना३सा३। ह्वगो२३४वा।

४ ५
काउतोई्वायि(३) ॥ २* ॥ [१७]

२ १ २
॥ वाङ्निधनक्रौञ्चम्॥ परायित्याऌ्हा३१२३४। र्य्

५ ३ २ २ १ २ ५२ ३२
तम्। ह्वरा३यिम्। बभ्रुम्पुना३१२३४। तिवा। रे

२ २२ १ २ २ ५ ३ २
णा३। योदेवान्वा३१२३४यि। श्वाऌ्इत्। परा३यि।

२ १ २ ४ २ १ २
मदेनामा३१२३। ह्वगाउच्छताउ ॥(१) दिर्यम्याञ्चा३

५ २ २ २ १२ २ २
१२३४। स्वय। मसा३म्। सखायोआ३१२३४। द्रि

५ ३ २ २ १ २ ५२ ३
स+ हता३म्। प्रियामायिन्द्रा३१२३४। स्यका। मि

२ २ १ २ ४
या३म्। प्रस्वापाया ३ १ २ ३। तऊ५म्मयाउ ॥(२)

२ १ २ ५२ ३ २ २ १ २ २
इन्द्रायासो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गा० १७प्र० २ख० २सा०।

५ २ २ २ १ २ ५र
३४। रिषि। च्यसा३यि। नरेचादा३१२३४। चिणा

२र १र २ ४
वता ३ यि। वोरायासा ३ १ २ ३। दना ५ सदाउ।

वा(३) ॥ ४* ॥ [१८] १८

अथ तृचात्मके चतुर्थ-सूक्ते—

प्रथमा।

१ २ १ २उ १ २ १ २ ३ २ ३ १र २र
पवस्वसोममहे दक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम!" "अश्वो न" अश्वइव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" चर॥

"महे"—"क्रत्वे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ १ ३ १ २ १ २ ३ १ २ ३ २ ३ १ २
प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

* ऊ० गा० २०प्र० २ख० ४सा०।

† ऋ० सा० ५, १, ५, ४ (१भा० ८७४ पृ०) ऋ० वे० ७, ५, २०, १।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्वइव स्नापितः'—इति वि०।

¶ 'दक्षाय—समर्थाय अथवा दक्षिणे सौमकर्मणे यजमानाय'—इति वि०।

§ ऋ० वे० ७, ५, २१, १।

"सोतारः" अभिषोतारः ऋत्विजः, हे सोम! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति"। तदेवोच्यते—"महे" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५,५).यास्कः] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम्॥

"प्रते"-"तन्वे"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳ हरिम्मृजन्ति

३ १ ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम्॥ ३† ॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजो मार्जयन्ति॥ ३॥ १९

२र २ र २ र १
॥ विधर्म्मम्॥ ओहोइवा। ओहोइवा। ओहो

---

* 'रसं—वीर्यम्'—इति वि०।

† ऋ० वे० ७, ५, २१, २।

‡ 'शिशु'—शंसनीयम्'—इति वि०।

¶ 'पवित्रे—वालमये'—इति वि०।

२ ५र ५ १ २ र १२ २र १ १ १ १ १
२वा२३४ओहोइवा । पवस्वसोममन्द्रयाया २ ३ ४ ५ ।

१ २र १ २ १र १र ३ १ १ १ १ १ र २र १र २र १ २ १
अश्वोननिक्तोवा२जीधना२या२३४५ । प्रतेसोतारोरसम्म

र २ १ १ १ १ २ १ २ १र २ १र २ १र १ १ १ १ १
दाया२३४५ । पुनन्तिसोमम्महेद्युम्नाया२३४५ । शिशु

२र १ २ ३ १ १ १ १ २ १ २र १र २ र १र २ १ १ १
ञ्जज्ञानᳪहरिम्मृजन्ती२३४५ । पवित्रेसोमदेवेभ्यइन्दू२३

१ १ १ २ र ३ १ १ १ १ २ १र २र ३ १ १ १ १
४५म् ॥(१) पवस्वसोमा२३४५ । महेद्रयाया२ ३ ४ ५ ।

१ २र १ ३ २ २र १र ३ १ १ १ १ १ र २र १र ३
अश्वोननिक्ता१ः । वाजीधना२या२३४५ । प्रतेसोतारा

१ १ १ १ १ २ १ र ३ १ १ १ १ १ १ २ १र १ १ १ १
२३४५ः । रसम्मदाया२३४५ । पुनन्तिसोमा२३४५म् ।

२ १र २ १र १ १ १ १ १ २ ३र २ २
महेद्युम्नाया२३४५ ॥(२) शिशुञ्जज्ञाना१म् । हरिम्मृज

३ १ १ १ १ २ १ २र १र १ १ १ १ २र १र २ ३ १ १ १ १
न्ती२३४५ । पवित्रेसोमा२३४५म् । देवेभ्यइन्दू२३४५म् ।

२र २ र १ ३ ५र ५ २ १२
ओहोइवा । २ । ओहो२वा२३४ओहोइवा । ए३ । विध

३ १ १ १ १
र्म्मा२३४५(३) ॥ ४* ॥ [१] १९

* ऊ० गा० ६प्र० १ख० ४सा० ।

अथ तृचात्मके पञ्चम-सूक्ते—

प्रथमा।

२ ३ २ ३ २ ३ २ ३ १ २ ३ १२ २२
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दुन्देवा अयासिषुः॥ १*॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्गं" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति॥ १॥

अथ द्वितीया।

१२ २२ ३ १ २ ३२ ३ १ २
तमिद्वर्द्धन्तुनोगिरोवत्सꣳसꣳशिश्वरीरिव।
१२ २२ ३ १ १
यइन्द्रस्यहृदꣳसनिः॥ २†॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तम्मित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्द्धयन्तु। तत्र दृष्टान्तः—"वत्सं"

* ऋ० आ० ६, १, १,१ (२भा० ४३ पृ०)=इहैव १, २, १८, १ (३भा०१६३ पृ०) = ऋ० वे० ७, १, २०, १।

† ऋ० वे० ७, १, २०, ४।

‡ 'हृदंसनिः—हृदिलाभः स्थितः'—इति वि०।

वालं "शिश्वरीरिव" यथा शिश्वर्यौ बह्वपयस्कामातरौ वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २

अर्षा नः सोम शङ्गवे धुक्षस्व पिप्युषीमिषम् ।

१ २ ३ १ १

वर्द्धा समुद्रमुक्थ्य ॥ ३* ॥ २०

हे सोम !" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" क्षर¶ । अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं‖ "धुक्षस्व" प्रपूरय** । किञ्च हे "उक्थ्य" प्रशस्य ! †† "समुद्रम्" ‡‡ "वर्द्ध" ¶¶ वर्द्धय ॥

"अर्षा नः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्" —इति च ॥ ३ ॥ २०

---

* ऋ० वे० ७, १, २०, ५ ।

† 'नः अस्मभ्यम्'—इति वि० ।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि० ।

¶ 'अर्ष—गच्छस्व द्रोणकलशम्'—इति वि० । मूले त्वर्षा इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः ।

§ 'पिप्युषीं—पान-समर्थाम्'—इति वि० ।

‖ 'सोमलक्षणं'—इति वि० ।

** 'धुक्षस्व—दुग्धस्व'—इति वि० ।

†† 'उक्था—उक्थानि सामानि'—इति वि० । एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात् ।

‡‡ 'समुद्र—द्रोणकलशम्'—इति वि० ।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः ।

॥ अध्यम् ॥ उपोषुजा २तम्। अप्नुरोवा। गोभि भ्ङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सिषाउवा। अूधिया २॥(१) तमिद्वर्द्धा२न्तु। नोगिरोवा। वत्सᳲसᳲशायि। अ्वरीरिवा। यइन्द्रस्यव। दा२३म्। सनाउवा। अूधिया २॥(२) अर्षानःसो२म। शङ्वोवा। धुक्षस्वपायि। प्युषीमिषाम्। वर्द्धासमुद्रम्। उ२३। विश्वयाउवा। अूधिया २। ए२३हिया ३४३। ओ२३४५ई। डा(३) ॥ ५* ॥ [१]

॥ प्रतीचीनेडक्काग्नीतम् ॥ उपोष्जातम्। आ २प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। द्वाहोयि। इन्दुर्देवाआ३या। सिषूः। औ२३होवा ॥(१) तमिद्वर्द्धन्तु। नो २गिराः। वात्सᳲसᳲशि। अ्वरायि

* क० गा० ६म० १अ० ७सा०।

७ ३र २ १ २ २ १
रिवा२३४। हाहोयि। यइन्द्रस्याहा२३ईम। सनायिः।

४ ५ १ र २ र १
औ२३होवा ॥(२) अर्षानःसोम। शा२ङ्वायि। धूक्ष

२ १ ७ ३र २ १ र
खपि। प्यु षायिमिषा२३४म। हाहोयि। वर्द्धासम्

२ २ १ २ ४ ५ ४ ५
द्रा३म। क्षियया। औ३होवा। ईडा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-

एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डे‡—

आघायेऽग्निमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आघाये अग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्।

२ ३ २ ३ २ ३ १ २
येषामिन्द्रोयुवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० २ख० ११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ ऋ० आ० २, १, ४, ९; (भा० ३१० पृ०) =ऋ० म० ८, १, ४५, १= ऋ० वे० ७, ३१।

"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति"॥ १॥

अथ द्वितीया।

१ २उ ३ १ २ ३ १ २ ३ २ ३ १र २र
बृहन्निदिध्म एषां भूरि शस्तं* पृथुः स्वरुः।
२ ३ २ १ २ ३ १ २
येषामिन्द्रो युवा सखा॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्त" स्तोत्र-स्वरूपञ्च "पृथुः" महान्। सिद्धमन्यत्॥ २॥

अथ तृतीया।

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २
अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः।
२ ३ ३ २ १ ३ १ २
येषामिन्द्रो युवा सखा॥ ३ ||॥ २१

---

* "शस्त"—इति ऋ०-पाठः।

† ऋ० वे० ६, ३, ४२, २।

‡ 'येषां—यजमानानाम्'—इति वि०।

¶ 'इध्मः—इध्मनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि०।

|| ऋ० वे० ६, ३, ४२, ३।

"युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः कश्चित् "अयुद्ध इत्" प्रागयोद्धैव सन् "युधावृतं" योद्धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मीयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ ३ ॥ २१

॥ ऐध्मवाहाद्यम् ॥ आघायेअग्निमिन्धातायि।° स्तृण न्तिबर्हिरानुषाक् ॥(१) बृहन्तिदिधाआयिषाम्। भूरिश स्त्रमपृथुःस्वरुः ॥(२) अयुद्धइद्युधावार्त्तीम्। शूरआज तिसत्वभायिः। येषामिन्द्रोयुवाइया। ऊवायि। ऊ वो२३४। वा। सा५खोई्हायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति त्र्यचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

यएकइद्विदयतेवसुमर्त्तायदाशुषे।
ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

---

* 'आजक्षेपणे'—इति वि०।

† ऊ० गा० ६प्र० १अ०' ६सा०।

‡ ऋ० आ० ४, २, ५, ८ (१भा० ७९८ पृ०)=ऋ० वे० १, ६, ६, १।

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति चिप्र-नाम (निरु० नै० ५, १७) ]"अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः। एवम्भूतः स "इन्द्रः" चिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ १ ॥

अथ द्वितीया।

१ १ १ १ ११२ २ ११२ २ ११
यश्चिद्धित्वाबहुभ्यआसुतावाँ आविवासति।
२१२ १२ ३१११२ १ १
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग ॥ २* ॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति [विवासतिः परिचरणकर्म्मा (निघ० ३, ५, १०)] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग" ‡ चिप्रं "आ पत्यते" आपतयति प्रापयति ॥ २ ॥

---

* ऋ० वे० १, ६, ६, ४।

† 'चित्-हि—इति पदपूरणौ'—इति वि०

‡ 'अङ्गशब्दः पुत्रवाची'—इति वि०।

अथ तृतीया।

३ १र २र २ १ २ ३ १र १र
कदामर्त्तमराधसम्पदा क्षुम्पमिवस्फुरत्।
२ १ २ ३ २ ३ १ २ ३ १
कदानःशुश्रवद्गिरइन्द्रोअङ्ग॥ ३* ॥२२

"अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टारमित्यर्थः†। एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति? यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [स्फुरति-स्फुलतीति बध-कर्म्मसु (निघ० २,१९,१५-१६ पठितत्वात्)]। "नः" अस्माकं यष्टॄणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रावत्" श्रोष्यतीति वितर्क्यते [अत्र निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते *** कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग (निरु० नै० ५, १७)" -इति क्षिप्र-नामैतत्॥ ३ ॥२२

२र २ २ १
॥ त्रैककुभम्॥ यएकइद्विदयाऽइताथि। वासुमर्त्ता
२ २ १ ३ ५ १ २र २ १ १
याऽइदा। ऊम्। ग्रू२३४षाम्। आयिशानोअप्रति

---

* ऋ० वे० १, ६, ६, ३।

† 'यस्य यज्ञार्थं राधसम्भन' न भवति, सोऽराधः'—इति वि०।

‡ 'कृन्तम् प्रक्षिपणीयं दुर्बलं मत,' यथा सहंसि बलिमः'—इति वि०।

१ १र २र १ १ ३ ५
च्कुतः। आयिग्रा। नोत्र्प्रतायि। च्कू२३४ताः ॥(१)

२ र २ १ र र २ १ १
यश्विद्धिला। वज्रभ्या३त्र्रा। सुतावा२आवी३वा। ऊम्।

३ ५ २ १ २ र १ २ १ २ ३ २ १
सा२३४तायि। उग्रन्तत्यत्यतेत्रवः। ऊग्रम्। तत्यत्यता

३ ५ २ र र २ १ र
यि। ग्रा२३४वाः ॥(२) कदामर्त्तमराधा३साम्। पदा

२ २ १ ३ ५ १ १र २
त्तुम्पामो३वा। ऊम्। स्फू२३४रात्। कदानःशुश्रव

१ १ १र ३ २ १ ३ ५ १
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः। आ

१र १ ३ ५र र ३
यिन्द्रोत्र्प्र। गा२। या२३४ ऒचोवा। ई२३४

५
न्द्राः(३) ॥ ७* ॥ [१] २२

अथ गायन्तीति-तृचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

१ २ ३ १र १र ४ २ ३ १ २
गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।

३ १ २ ३ २ ३ १ २
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे ॥ १‡ ॥

---

* ऊ० गा० ६प्र० १ख० ७सा०।

† 'तृतीयमुक्थम्'—इति वि०।

‡ छ० आ० ४, २, १, १ (१भा० ६९४ पृ०) = ऋ० वे० १, १, १९, १।

हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति ते ऽर्कमर्किणो ब्रह्माणस्त्वाशतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनच्छ्रयतइति वेति" (निरु० नै० ५,५)। अर्क-शब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १र २र३ १र २र ३ १ १
यत्सानोस्सान्वारुहोभूर्यस्पष्टकर्त्वम्।
२उ ३ १ १ ३ १ २ ३ १ २
तदिन्द्रोअर्थञ्चेततियूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरुढ़वान्।

* ऋ० वे० १, १, १९, २।

तथा "भूरि" बहुकर्म यागरूपम् "असृष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृषा" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† अस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठौ॥१॥

अथ तृतीया।

१ २उ १ २ ३ १ ३ १ २ ३ १
युङ्क्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा।
१ २ ३ १र ०र
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर॥३‡॥ २६

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्वा¶ हि" § सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्प्रदेशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, ३=ऋ० वे० ८, ३४।

¶ संहितायां "युङ्क्ष्वा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०

"कक्ष्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कक्ष्यः, तस्य पूरकौ पुष्टाङ्गा-वित्यर्थः ॥

"युङ्क्ष्व"-"युक्ष्वा"—इति पाठौ ॥

युङ्क्ष्वा—सति शिष्टत्वेन प्रत्यय-स्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्या-कारादेशः। वृषणा—वृषु मृषु सेचने (भ्वा० प०) "कनि-न्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्, "ञ्नि-त्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वाषपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्व-वदाकारः (७, १, ३९)। कक्ष्यप्राः—कक्ष्ययोर्भवं कक्ष्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृति स्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहि-तायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)" —इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रि-तस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-

वेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्तिरुदात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ), स्तुति-शब्देन प्रादिसमासे तदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-चनितिकृत्यचौ इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः पर-निपातः॥ ३॥ २३

॥ उद्वꣳशीयम्॥ गायन्तित्वागायत्रिणाऽ३। अर्च्च न्त्यर्कमर्क्का२३यिणाः। ब्रह्माणस्त्वा२३हो१यि। शतक्रा२ ३ताउ। उद्वꣳशमिवया१यिमो३रे। उद्वꣳशा२३४मो। वाया३उवा३। उप्। मा५यिरो३५हायि॥(१) यत्सा नोस्सान्वारुहऽ३। भूर्य्यस्पष्टकर्त्त्वा२३वाम्। तदिन्द्रा २हो१गि। अर्थंचेता२३तायि। यथेनवृष्णिस१यिजा३ तायि। यूथेना२३४वृ। ष्णायिरा३उवा३। उप्। जा ५२तो३५हायिः॥(२) युक्ष्वाहिकेशिनाहरीऽ३। वृषणा कक्षिया२३प्रा। अथानो२३हो१यि। इन्द्रासोमा२३पाः।

१र १ २ १ २ १ ५ १ ऽ
गिरामुपश्रुता१यिच्चा२रा। गिरामू२३४पा। श्रुता३उ

१ १ १ २
वा३। उप्। चा ऽ२रो३५हायि(३) ॥ ८* ॥ [१]

५र २ १ १
॥ हिरण्यस्तस्त्वाष्ट्रीसाम ॥ गाय। तित्वा३। हा३

१ २र ११ ५ २१ २ १
हा। गायत्रायिणा२३४ः। अर्च। तिया३। हा३हा।

२११ ५र २१ १ १
कमर्क्कायिणा२३४ः। ब्रह्मा। णस्त्वा३। हा३हायि।

२११ ५ २१ २ १ २
शतक्राता२३४उ। उद्। यमा३यि। हा३हायि। व

२ १ ५ ४ ५ ५र २र
या३हो२३४। वा। मा५यिरोई३हायि ॥(१) यत्सा। नो

१ २ १ २२१ ५र २१
सा३। हा३हा। नुवाहहा२३४ः। भूरि। अस्पा३।

२ १ १२१ ५ २र २ १
हा३हा। ष्टकर्त्तूवा२३४म्। तदि। द्रो अा३। हा

१ १२र १ ५र २१ २ १
३हा। यच्चेताता२३४यि। यूथे। नवा३। हा३हा।

१२ १ ५ ४ ५ ५र
ष्णारा३हो२३४। वा। जा५तोई३हायि ॥(२) युक्त्वा।

---

* ऊ० गा० ६प्र० १अ० ८सा०५

३ १ २ २ ३ १र १ ५ १र
हिका३। हा३हायि। श्रिनाहारा२३४यि। वृष। णा

२ २ २ १ ५र ३ २
का३। हा३हा। च्चियाप्रा२३४। अथा। नआ३।

२ २ ३ २र १ ५र ३ २ २
हा३हायि। द्रसोमापा२३४ः। गिराम्। उपा३। हा

२ ३ २ १ ५ ४ ५
३हायि। श्रुता३यिं(ं)हौ२३४। वा। चापूरो६हा

यि(३)॥१*॥[२]

५र ३ २ ४र ५ १
॥गौरीवितम्॥ गाय। तित्वा३। गायत्रिणाः। अ

१ र २ ४
र्चन्त्यर्कमर्किणा२३ः। ब्रह्माणस्त्वा३१२३। शतापूक्रता

१ २ ४ ५ ४ ५
उ। ऊद्व(ं)शमा३१२३यि। वयोवा। मापुयिरो६हा

४ ५ २र २ ४ र ५ १र
यि॥(१) यत्सा। नोःसा३। नुवारुहाः। भूर्य्यस्पष्ट

१ र २ ४
कर्त्तुवा२३म्। तादिन्द्रोआ३१२३। थच्चेपूततायि।

१र र २ ४ ५ ४ ५ ५ र
यूथेनवा३१२३। ञ्णिरोवा। जापूतो६हायि॥(२) युञ्जा।

३ १ ४ र ५ १ र १
हिका३यि। श्रिनाहरायि। वृषणाकच्चियप्रा२३। आ

* ऊ० गा० १३प्र० १ख० १सा०।

र २ ४ १ र २
थानआ३१२३यि। द्रसो५मपाः । गायिरामुपा३१२३ ।
४ ५ ४ ५
अतोवा । वा५रोईवायि(३) ॥ ५* ॥ [३) २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

---000---

* ऊ० गा० २१प्र० १अ० ५सा० ।

† 'द्वादशाहस्य नवममहः षट्चत्वारिंशत् स्तोमिकम्—इति वि० ।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०, मूल-पदपन्थादिसम्मतश्चैतत् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्ध इति चतुऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २     ३ १ २ ३ १   २ ३ १ २
सुषमिद्धो‡न आवह देवाꣳ अग्ने हविष्मते ।
१ २     ३ १ २
होतः पावक यक्षि च ॥ १¶ ॥

हे "अग्ने !" "सुसमिद्धः" § एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं दशममहरग्निष्टोमः । * * * । तस्य बहिष्पवमानं द्वितीय-प्रभृतीनां त्रयाणामस्यानुरूपं * * * तवर्चं सर्वं मयस्तादधीतमस्त्,—इति वि० ।

† इदानीं सुषमिद्धो न आवह इति इध्मध्याज्यानि भवन्ति—इति वि० ।

‡ "सुसमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, १४, १ ।

§ 'सुष्ठु समिद्धः सुसमिद्धः'—इति वि० । ऋग्वेदीय-पाठ मवलम्ब्यैवाय प्रतीक-ग्रहणं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धन्य-मध्यः सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६)"—इति च तत्र वचनम् ।

दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—समः क्रियाविशेषणत्वेन गति-सञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "वि-शेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रि या-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव कृदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दोऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनु-नासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवद् (८, १, ७२)"—इति पूर्वस्या-विद्यमानत्वेन पदात्परत्वात् पादादित्वाच्च परस्य सामानाधि-करण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्त्वम्,

* 'नः—अस्मभ्यम्'—इति वि०।

† 'यक्षि च—यज भक्षणे, देवानावह भक्षय च'—इति वि०।

अतएवाविद्यमानवत्त्वात् सामर्थ्येपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः—इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यक्षि—"यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४,७३)"—इति शपो लुक्, व्र[illegible] (८, २, ३६) षत्वम्, "षढोः कः सि (८, २, ४१)"—इति कत्वम्, सेर्ह्यादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङ्ङतिङः (८, १,२८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदात्परत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादितिचेत् न, यक्षि पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८,१, ७३)"—इति तस्य नित्यमविद्यमानत्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यक्षि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदमविद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव? सत्यम्;——अत्र यक्षीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः]॥ १ ॥

अथ द्वितीया।

१ २          १ २ ३ १ २
मधुमन्तन्तनूनपाद्यज्ञन्देवेषु नः कवे।
३ १ २    ३ १ २
अद्याकृणुह्यूतये ॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय ॥

"ऊतये"-"वीतये"—इति पाठौ ॥ २ ॥

अथ तृतीया।

२ ३ १    १ ३ २ ३ २ ३ १ २ ३ १र   २र
नराशꣳसमिह प्रियमस्मिन्यज्ञ उपह्वये।
१ २        ३ १ २
मधुजिह्वꣳ हविष्कृतम् ॥ ३‡ ॥

"इह" देवयजनदेशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

---

* ऋ॰ वे॰ १, १, २४, १।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु॰ दै॰ २, ५-६।

‡ ऋ॰ वे॰ १, १, २४, ३।

सम्"*—एतन्नामकमग्निम् "उपह्वये" आह्वयामि । कीदृशम् ? "प्रियं" देवानां प्रीति-हेतुं, "मधुजिह्वं" मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
अग्नेसुखतमेरथेदेवाँ२ईडितआवह ।

२ ३ २ ३ १ २
असिहोतामनुर्हितः ॥ ४† ॥ १

इदं-शब्दाभिधेय हे "अग्ने !" "ईडितः" अस्माभिः स्तुतः सन्‡ "सुखतमे" अतिशयेन सुख-हेतौ कस्मिंश्चित् "रथे" "देवान्" स्थापयित्वा कर्म-भूमौ "आ वह" [ इट्-शब्दाभिधेयत्व-मत्र सूचयितुमीडित इति विशेषणम् ] । "मनुर्हितः" 'मनुना' मन्त्रेण मनुष्येण वा यजमानादि-रूपेण 'हितः' अत्र स्थापितः त्वं "होता" देवानामाह्वातासि ॥ ४ ॥ १

---

* "नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति"—इत्यादि निरु० दै० २, ६-७ ।

† ऋ० वे० १, १, २४, ४ ।

‡ 'ईडितः—प्रीणितः'—इति वि० ।

अथ यदद्येति त्चात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ २ ३ उ ३ २ १ १ २ २ १ २ ३ २
यदद्यसूरउदितेनागामित्रोअर्यमा।
३ १ २ ३ १ र २ र
सुवातिसविताभगः॥ १† ॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयत् [अथवा अनागा मित्रो अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु] ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ २ उ ३ १ र २ र
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।
२ ३ १ २ ३ १ २
येनोअंहोतिपिप्रति ॥ २‡ ॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [प्र-शब्द आदरार्थः]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा? इत्युच्यते— हे "सुदानवः" सुदानाः! युष्माकं

* 'मैत्रावरुणमाज्यम्'—इति वि०।

† ऋ० वे० ५, ५, ८, ४।

‡ ऋ० वे० ५, ५, ८, ५।

"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमा-गत्य "नः" अस्माकम् "अंहः" पापम् "अति पिप्रति" अतिपात-यथ, तेषां गमनइति ॥ २ ॥

अथ तृतीया ।

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
महो राजान ईशते ॥ ३ * ॥ ७

"उत" अपि च "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातु-मिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अद-ब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमत-धनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ ७

* ऋ० वे० ५, ५, ९, १ ।
† 'अदितिः—अदीनत्व-सम्पन्नाः'-इति वि० ।
‡ 'महः—अभिमान-सम्पन्नाः'—इति वि० ।
¶ 'व्रतस्य—कर्मणः अन्नस्य वा'—इति वि० ।

उत्त्वेति तृचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा ।

१ २     ३ १ २     ३ १र २र
उत्त्वामन्दन्तु सोमाः कृणुष्वराधो अद्रिवः ।
१ २ ३ १ २
अवब्रह्मद्विषोजहि ॥ १ † ॥

हे इन्द्र ! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु । हे "अद्रिवः !" वज्रवन्निन्द्र ! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु ! किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" ॥

"सोमाः"–"सोम।"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३२ ३ २ ३ ३ २ ३ १ २     ३ १     २
पदापणीनराधसोनिबाधस्वमहाँ असि ।
१उ ३ २ २ १ २
नहित्वाकश्चनप्रति ॥ २ ‡ ॥

"पणीन्" लुब्धान्¶ "अराधसः" यज्ञार्थ-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

---

* 'ऐन्द्रसाम्यम्'—इति वि० ।

† छ० आ० ३, १, १, १ ( १ भा० ४२१४० ) – ऋ० वे० ६, ४, ४३, १ ।

‡ ऋ० वे० ६, ४, ४३, २ ।

¶ 'पणीन्—पणस्वभावान्'—इति वि० ।

बाधस्व। हे इन्द्र! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु॥

"पणीमराधसः"-"पणीरराधसः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २   ३ १ २ ३ २ ३ १र २र<br>
त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्।<br>
२उ   ३ १ २<br>
त्वंराजा जनानाम्॥ ३ *॥ ३

हे "इन्द्र!" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि॥ ३॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः†॥ १॥

---

* ऋ० सं० ६, ४, ४३, ३।

† 'इन्द्राग्नी आगतमित्यच्छावाकसाम'—इति वि० अतः परं व्यवहार्थमिति शेषः। 'उक्तं प्रातःसवनम्'—इति च वि०।

अथ द्वितीय-खण्डे*—

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१२ १२३ १२३१२ ३१२
आजागृर्विविप्रऋतम्मतीनाꣳ

२२ ३१ ३१२
सोमःपुनानोअसदच्चमूषु।

१२३१ २३२ ३१२
सपन्तियम्मिथुनासोनिकामा

३१२ १२ २३१२
अध्वर्यवोरथिरासःसुहस्ताः॥ १ †॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतानां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथुनासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्वर्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः‡]॥

"ऋतम्"-"ऋता"—इति पाठौ॥ १॥

---

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि०।

† ऋ० वे० ७, ४, १८, २

‡ 'सपति'—इति परिचरण कर्मसु (३. ५) अर्चति कर्मसु च (३, १४) इत्यत्र निघण्टौ।

अथ द्वितीया।

१ १ २ २उ ३ २ ३ १ २ ३
सपुनानउपसूरेदधान

१२ २१ ३ १ २ ३ १२ १२
ओभेअप्रारोदसीवीषआवः।

३ २ ३ १ २ ३ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती

३ १२ २१ ३ २ ३१२ १२
सतोधनङ्कारिणेनप्रयꣳसत्॥ २ *॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा "सोमः" "आवः" स्व-तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) च्लेर्लुक्, "छन्दस्यपि दृश्यते (६, ४, ७३)" —इत्यडागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियसासः" अत्यन्तं प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिप्यडागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्।

* ऋ० वे० ७, ४ १८, २।

"दधानओभे"-"दधानोभे"—इति पाठौ, "सतोधनं"-"सतूधनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३
सवर्द्धितावर्द्धनःपूयमानः
१ २ ३ २ ३ १ ३ १ २
सोमोमीढ्वाँ अभिनोज्योतिषावीत्।
१ २ ३ १ २ ३ १ २ ३ १
यत्रनःपूर्वपितरःपदज्ञाः
३ १ २ ३ १र १र २ १
स्वर्विदोअभिगाअद्रिमिष्णन् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः सुर्यं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" शिलो-च्चयम् "अभि" लक्ष्य गन्तुम् "इष्णन्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णन्"-"ष्णन्"—इति च ॥ ३ ॥ ४

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।

॥ गौरीवितम् ॥ आजा । गृवा३यिः । विप्रश्नताम् । मतीनाꣳसोमःपुनानोअसदच्चमूषू२३ । सापन्तिया ३ १ २३म् । मिथुनासोनिकामा५ध्वर्या । वोरथिरा३१२३ । सःसोवा । हा५स्तोई्हायि ॥(१) सपु । नाना३ः । उपसूरायि । दधानःओभेअप्रारोदसीवीषआवा२३ः । प्रायाचिद्या३१२३ । स्यप्रियसासजतीसा५तोधा । नाङ्करिणा३१२३यि । नप्रोवा । या५ꣳसोई्हायि ॥(२) सवह्निता३ । वर्द्धनःपू । यमानःसोमामीढाꣳअभिनोज्योतिषावा२३यित् । याचनःपू३१२३ । वंपितरःपदत्वाःस्व५र्वायि । दोअभिगा३१२३ः । मद्रोवा । या५यिष्मोई्हायि(३) ॥ १४ * ॥ [१]

॥ अग्नम् ॥ आजा । गृविर्विप्रकृताम् । मती३

* ऊ० गाँ० ६प्र० १अ० ४खा० ।

नाम्। सोमःपुना। नो३अस। दक्षमूषू। सपन्ति

यम्मिथुनासो। निका२३माः। अध्वर्यवो। रथिरा।

सा३४३ः। सूक्ता५स्ता६५६ः॥(१) सापू। नानउपशू

रे। दधा३नाः। श्रोभेश्रप्राः। रो३दसी। वीषश्रा

वाः। प्रियाचिद्यस्यप्रियसा। सजू२३षौ। सतोधनाम्।

कारिणे। ना३४३। प्रा३या५ऌसाई५६न्॥(२) सावा।

धितावर्द्धनःपू। यमा३नाः। सोमामीढ्वाऌ। अभि

नः। ज्योतिषावीत्। यत्रनःपूर्वपितराः। पदा२३ज्ञाः।

सुवर्विदो। अभिगाः। आ३४३। द्रा३यिमा५यिष्णा

६५६म्(३)॥ ५ *॥ [२]

॥ यज्ञायज्ञीयम्॥ आजाऽ५ग्न। वा३र्वा३यिप्रश्न

नाम्। मातीनाऌसोमःपुनानोअसा। दा३क्षामू३षू।

---

* ऊ० गा० १०प्र० १ख० ५सा०।

१ १ २ २ २ २ १
सपा२न्तियम्मिथुनासोनि। कामा२३ध्या। ऊम्मायि।

२ २ १ २ १ १ १ १ १ १
ध्वा३य्यो। योरथिदासःसू२क्तताउ॥(१) तासाः। पुना

२२ २ २२ २२ २ १ २ २
नउपछरेदधानओभेअप्रारोदसी। वी३षाआ३ वाः।

१ १ २ २ २ १
प्रिया२चिद्यस्यप्रियसासः। उतो२३सा। ऊम्मायि।

२ २ १ २ २ २ १ १ १
तो३धा। नाह्वारिणेनप्रा२यःउ ॥(२) सात्माः। बर्हि

२ २ २ २२ २ २ २ १ २ २
ताबर्हिनःपूयमानःसोमोमीढ्वा२अभिनो। ज्यो३तीषा३वी

१ १२२ २ १
त्। यथा२नःपूर्वेपितरःप। दक्षा२३ःसू। ऊम्मायि।

२ २ १ २ २ २ ११
षा३वायि। दोअभिगाअद्रा२यि। मिष्याउ। वा२३

११
४५(३)॥ ११* ॥ [३]

३२ ४२ ३ ४ ५ २ २ १
॥ गोष्ठक्रम्॥ आजागृविर्विप्रः। ऋतार्श्म्। मा

२ ५२ २ ४ ५ १२ २
२३४। तीनाऽसोमः। पूना। नोअसदच्चमूषुसपन्ति

२ २ १ १ २
यम्मिथुनासोनिकामा२ध्वर्य्यो२। धा२जवायि। योरा

* ऊ० आ० १२प्र० १ख० १३गा०।

र २ १ ५ ४ ५
थि। रासःसोवा३ओ२३४वा। हा५स्तो ६ हायि॥(१)

३ ४ १र ४ ५ ३र २ १ र ५ र र
सपुनानउप। हरा३यि। दा२३४। धानओभेअ।

४ ५ १ र र र र र र र १र
प्रारो। दसोवीषआवःप्रियाचिद्यस्यप्रियसासऊतीसा२तो

१ र १ १ ५
धा२। हा२ऊऊवायि। नक्कारिणेनप्रोवा३ओ२३४वा।

४ ५ ३ ४ ३र४ ५ ३ २ १
या५ऽसोई हायि॥(२) सवर्द्धितावर्द्ध। नःपू३। या२३

र ५ र र र ४ ५ १ र र र र
४। मानःसोमोमी। द्वाऽऽआ। भिनोज्योतिषावीद्य

र र र १ १
अनःपूर्वपितरःपदज्ञाःस्व२र्ववा२यि। हा२ऊऊवायि।

र र २ १ ५ ४ ५
दोअभिगाअद्रोवा३ओ२३४वा। आ५यिषणो६हा

यि(३)॥ १०* ॥ [४] ४

अथ माचिदन्यदिति प्रगाथात्मकं द्वितीयसूक्तं—

प्रथमा।

१ २ ३ १ २र ३ १ २ ३ १ २
माचिदन्यद्विशऽऽसतसखायोमारिषण्यत।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
इन्द्रमित्स्तोतावृषणऽऽसचासुतेमुहुरुक्थाचशऽऽसत ॥१†॥

* ऊ० गा० २६प्र० २ख० १०सा०।

† छ० आ० ३, १, ५, १० (इंभा० ५०० पृ०) = ऋ० व० ५, ७, १०, १।

हे "सखायः" समान-ख्यानाः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे प्रशास्त्रादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥१॥

अथ द्वितीया।

३   १ २   ३ १ २ १ २ ३ १   २र   ३ १ २
अवक्रक्षिणंवृषभंयथाजुवङ्गान्नचर्षणीसहम।

३ १ २   ३ १ २   ३ १   २र   ३ १ २
विद्वेषणᳪसंवननमुभयङ्करंमᳪहिष्ठमुभया[illegible]॥२*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्[illegible]गशील शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषमिव† "चर्षणीसहम्" मनुष्याणां शत्रुभूतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधानेनोपेतम् [यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितव्येनोपेतम्। अथवा उभयविधै स्तोतृभिर्हविर्भिश्चोपेतम्]—एवंविध मिन्द्रमितस्तातेति पूर्वेणान्वयः॥

* ऋ० वे० ४, ७ १०, २।

† 'गां न—न-शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।

"शुवं"-"शुरं"—इति पाठौ, "संवननं"-"संवननंमा"—इति च ॥ २ ॥ ५

॥ मैधातिथम् ॥ माचिदन्यदोहायि । विशा२३सा
ता । सखाया२हो१यि । माश्री३हो । रायिषाउवा ।
ण्याताउवा । इन्द्रमित्स्तोतावृषणाश्री३हो । साचाउ
वा । सुताउवा । मुहुरुक्थाश्री३हो । चशा । श्रौहो ।
वाहो२३४वा । सा५तो६हायि ॥(१) मुहुरुक्थोहायि ।
चशा२३साता । मुहुरु२हो१ । क्थाश्री३हो । चाशा
उवा । साताउवा । अवक्रक्षिणंवृषभाश्री३हो । याथा
उवा । जूवाउवा । गान्नचाश्री३हो । षणा । श्रौहो ।
वाहो२३४वा । सा५हो६हायि ॥(२) गांन्नचोहायि ।
षणा३यिसाहाम् । गाना२हो१यि । चाश्री३हो । षा
णाउवा । साहाउवा । विद्वेषणा२संवननमाश्री३हो ।

१ २ १ २ १ २ १ २
भायाउवा। काराउवा। काराउवा। मंहिष्ठमाश्रौ

२ १ १र १ १र ५ ४
हुवो। भया। श्रौहो। वाहो२३४वा। वा५यिमो

५
इहायि(३)॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ १र १र १ २ १ १ १
उदुत्येमधुमत्तमागिरःस्तोमासईरते।

१ १ २ १ १र १र १ २ १ १ १
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरा" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्धं प्रसरन्ति [ईर गतौ आदादिकः (आ०)]। तत्र दृष्टान्तः—"सत्राजितः" सहैव अमून् जयन्तः "धनसा" धनानि सम्भजन्तः [वन षण सम्भक्तौ (भ्वा० प०), "जन-सन-खन-क्रम-गमो विट् (३, २, ६७), "विड्वनोरनुनासिकस्यात् (६, ४, ४१)"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [क्षियो भावे निष्ठा, "निष्ठायामण्यदर्थे (६, ४, ६०)"—इति

---

* ऊ० गा० ६प्र० १ख० १५सा०।

† छ० आ० ४, २, १, ८ (१आ० ५१८ छ०) = ऋ० वे० ५, ७, १०, ५।

पर्युदासाद्दीर्घाभावः अतएव "चियो दीर्घात् (८, २, ४६)"—इति निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, वाचि "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्ततः उत्तिष्ठन्ति तद्वदुदीरतइत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३१ २ २ १ २ ३ २ ३ २ ३ १ २
कण्वाइवभृगवःसूर्य्याइवविश्वमिद्धीतमाशत।
२ ३ १ २ ३ २ २ १ २ ३ १ २
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" स्तुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यात्मम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्सञ्ज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [स्वृ शब्दोपतापयोः भौवादिकः (प०)]॥

"आशत"-"आनशुः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० सं० ५, ७, २८, १।

† अत्राह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत्—इति पादपूरणः'—इति वि०।

¶ अत्राह यास्कः—"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ३, १७।

॥ अभीवर्त्तम् ॥ उदू३त्ये३माधुमत्तमोवा। गायिर स्तोमा। सआयिरा१ता२यि। सावाजिनौ३१२३४। धनमाऽ३। चितोता१या२ः। वाजायाश्न्ता२ः। रथाऽ३ः। आ२३४५यि। वा२ ३ ४ ५ ॥(१) वाजा३रा३न्तोरथाइवो वा। वाजयन्तः। रथाआ१यिवा२। काण्वाइवा३१२३ ४। भृगवःस्व। रियाआ१यिवा२। विश्वामा१यिद्वो२। तमा३। श्रा२३४५। ता२३४५ ॥(२) विश्वा३मा३यिद्वो तमाश्रतोवा। वायिश्वमिद्वो। तमाश्राता२। आयि स्तोमा३१२३४यि। भिर्मह्य। तआया१वा२ः। प्रिया मा१यिधा२। सोआ३। स्वा२३४५। रा२३ ४५न्(३) ॥ १६* ॥ [१] ६

---

* ऊ० गा० ६प्र० १ख० १६गा०।

अथ पर्य्यूष्विति त्र्यृचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा।

१ २ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पर्य्यूषुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः।
२ ३ २ ३ १ २ ३ १ २
द्विषस्तरध्याऋणयानईरसे ॥ १* ॥

हे सोम! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि प्रधन्व" परितः प्रगच्छ [ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छसि।

"ईरसे"-"ईयसे"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अजीजनोहिपवमानसूर्य्यंविधारेशक्मनापयः।
१ २ ३ १ २ ३ १ २
गोजीरयारंहमाणःपुरन्ध्या ॥ २† ॥

हे "पवमान" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्य्यम्"

---

* ऊ० गा० ५, १, ५, २ (ऋ० आ० ८७१ पृ०)=ऋ० वे० ७, ५, २२, १।

† ऋ० वे० ७, ५, २२, २।

"मजीजनः हि"* उत्पादितवान् भवसि खलु । कीदृशः ? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतृणां प्रेरित-पशुकेन-स्वर्थः, तादृशेन† ; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्यमजीजनः ॥ २ ॥

अथ तृतीया ।

अनुच्छ्वात्तसुत७ँसोममदामसि ॥ ३ ¶ ॥ ७

—इति तृतीयायाया ऋचः प्रतीकमिदम । सा चान्यत्र ( ५, १, ५, ६ = १ भा० ८७७पृ० ) व्याख्याता ॥ ३ ॥ ७

॥ यज्ञायज्ञीयम् ॥ परा३१यि । ऊ३षू । प्रध । न्वा छवा । एहियाजा । सातयेपा । रि । वृत्रा२ । एहि या२ । णिसच्चणायिन्द्रा३यिषा३ः । ता२३४रा । ऐवा २यि । एवि या२ । धियाकृणयाना३ई३ । रा३४५सो ६हायि ॥(१) अजा३१यि । जा३नो । विप । वा३मा ।

* 'हि-इति पद-पूरणः'—इति वि० ।

† गोजीरया रंहमाणः—गोजीरेण संयुक्तया दध्ना वा मिश्रया, रंहमाणः वेगेन गच्छमानः'—इति वि० ।

‡ 'पुरन्ध्या'—उदकेन –इति वि० ।

¶ छ० आ० ५, १, ५, ६ (१ भा० ८७७पृ०) = ऋ० सं० ७, ५, २१, १ ।

एहिया। ना। हरियंवायि। धा। रैशा२। एहिया २। कनापृषोगो३जी३जी३। रा२३४या। ऐहा२यि। एहिया२। र(ं)हमाणाःप्र३रा३म्। धा३४५यी ६ हायि॥(२) अनु३१। हा३यित्वा। सुतम्। सो३म। एहिया। षा। दामसिमा। हे। समा२। एहिया २। यंराजियेवा३जा(ं)३। आ२३४भो। ऐहा२यि। एहिया२। पवमानाप्रा३गा३। हा३४५मो ६हा यि(३)॥ १८ *॥ [१]

॥ आन्धीगवम्॥ पर्य्युषुप्रधा१न्वावा। जसात। येपा२३री। ऊम्मा२१ऽ३। वृत्राणिमक्षणिर्द्विषस्तरा२३ ४५। धारया३उवार्णा२या। ना२३ई। रसा। औ ३होवा॥(१) अजीजनोहिपा१वामानहरि। पंवा२३

---

* ऊ० गा० ६प्र० १ख० १८सा०

२ १ २र १ २र १र र २ ३ १ १ १ १
यिधाऊम्मा२१ऽ२। रेभक्मनापयोगोजीरयार ३ ४ ५।

१ २ २ २ १ १
राऽहाइउवा। मा२पगम्। पू२३राम्। धिया। औ

४ ५ २ र १ १र
३होवा॥(२) अनुह्वित्वासुता१ऽसोमा। मदाम। रू

२ १ १र २र ११ र २ ३ १ १
मा२३हे। ऊम्मा२१ऽ३। समर्याराज्येवाजाऽअभीर३

११ २ २ १ १ २
४५। पावा३उवा। मा२ना। प्रा२३गा। हसा। औ

४ ४
३होवा। होऽ५ई। डा(३)॥१८*॥[२]

३ र४ २ ४
॥ विराट्सुवामदेव्यम्॥ पाऽ५रि। ऊषू३ प्रा३ध

र ५ १ र २र१ २१र २१ २१
न्वावा। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त। रा।

२ र २ १ र र र ४१
औ३होहायि। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त।

२ र २ १ २ ३र २
रा। औ३होहायि। धियार३क्षणयाः। नऔहो३।

१ १ २ ३ र ४
ऊम्मा२। राऽ२सो३५हायि॥(१) आऽ५जी। जनो३

४ ५ १ र २ १र२र१ २र १२र १र २र१
यिपवमा। ना। हरियंविधारेभक्मनापयोगोजीर।

---

* ऊ० गा० ६प्र० १अ० १८सा०।

आ। औ३होहायि। मा। हरियंविधारेअक्मनापयोगो

जीर। या। औ३होहायि। र९हा२३माणः। पुरो

हा३। ऊम्मा २। धाऽ२ये।३५हायि॥(२) आऽ५मु।

क्षित्वा३ह३त९सोमा। मा। दामसिमदेसमर्य्य राज्ये

वाजा९श्व। भा। औ३होहायि। मा। दामसिमदेसम

र्य्य राज्ये वाजा९श्व। भा। औ३होहायि। पवा२३मा

माना। प्रगौहो ३। ऊम्मा २। हाऽ२ सो ३ ५ हा

यि(३) ॥ ८* ॥ [३]

॥ गौरीवितम् ॥ परि। ऊषू३। प्रधन्वावा। ,जसा

तयेपरिवृत्रा२३। णायिसक्षणा३१२३यिः। द्विषा५स्तरा।

ध्याऋणाया३१२३ः। नओवा। रा५सोऽ६हायि(१) ॥ ५†॥[४]

---

* ऊ० गा० ८प्र० २ख० ८सू० ।

† ऊ० गा० १०प्र० २ख० ५सू० ।

॥ ओकोनिधनम् ॥ अजा३यिजनोह्रिपवमा। नस्।
रियंविधारेभक्ष्मना २पाया २ः। गोजा २यिराया २।
र उहस्रा २३४णाः। पुरम्। धा २या २३४औहोवा। औ
होवा। ओ २३४का: (२) ॥ ६ * ॥ [५] ७

अथ परिप्रधन्वेति त्र्यृचात्मकं पञ्चमं सूक्तम्—

तत्र प्रथमायाऋचः

परिप्रधन्व ॥ १ † ॥

—इति प्रतीकमिदम्। सा चान्यत्र (५, १, ५, १—१भा० ८६८पृ०) व्याख्याता ॥ १ ॥

अथ द्वितीया।

एवामृताय महे क्षयाय
सशुक्रो अर्ष दिव्यः पीयूषः ॥ २ ‡ ॥

---

* ऊ० गा० २०प्र० २ख० ६गा०।

† छ० आ० ५, १ ५, १ (१भा० ८६८पृ०)=ऋ० वे० ७, ५, २०, १।

‡ ऋ० वे० ७, ५, २०, २।

हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरणाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व चर॥२॥

अथ तृतीया।

२ २ ३ १ २ ३
इन्द्रस्तेसोमसुतस्यपेयात्

२ ३ १ १ ३ १ २ १ २
क्रत्वेदक्षायविश्वेचदेवाः॥ ३ *॥८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव स्वभूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु॥

"पेयात्"-"पेयाः"—इति पाठौ॥३॥८

१ १ १
॥ वाङ्निधनंसौहविषम्॥ प। येपारी। प्रधन्वा।

२ १ र र २ १ २र १
होवा३होयि। इन्द्रायसोमा। होवा३होयि। स्वादु

र २ १ र र ३ ५ ४
र्मित्राया। होवा३हो२३यि। पूष्णोवाओर३४वा। भ

* ऋ० वे० ७, ५, २०, २।

गा५याउ ॥(१) एव। एआयिवा। एव। एआयिवा।
अमृतायाया। होवा ३ होयि। मर्त्तेत्तयाया। होवा ३
होयि। सप्तुक्रौअर्षा। होवा३हो२३यि। दिव्यौवा
ओ२३४वा। पीयू५षाउ ॥(१) इन्द्रः। एआयिन्द्राः।
इन्द्रः। एआयिन्द्राः। तेसोमा। होवा३होयि। सु
तस्यपेयात। होवा३होयि। क्रत्वेदत्ताया। होवा ३
हो २ ३ यि। विश्वौवाओ २ ३ ४ वा। वद्दा५यिवाउ।
वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाऔहोहायि। न्वाई२३४
न्द्रा। यमोमा२३४हायि। स्वादुर्मित्रा३३। औहोवा।
इहा२३४हायि। उक्रवा२३४या। पू। ष्णायिभगा३४।
औहोवा। इहा२३४हायि। औहो३१२३४। या। ए

* ऊ० गा० ६प्र० १ख० २०गा०।

हियाई६हा ॥(१) एवाम्हताऔहोहायि । यामा२३४हे । अयाया२३४हायि । सम्राक्रोआ३४ । औहोवा । इहा २३४हायि । उरुवा२३४र्पा । दित्याःपीयू३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । षाः । एहिया ६हा ॥(२) इन्द्रस्तेसोमाऔहोहायि । मासु२३४ता । स्य पेया२३४हायि । क्रत्वेदक्षा३४ । औहोवा । इहा २३ हायि । उरुवा२३४या । वि । श्वायिचद्रा३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । वा । एहियाई हा । होपुई । डा३) ॥ १०* ॥ [२]

॥ सप्तम् ॥ परिप्रा३धान्वाई२३४न्द्रा । यसोमा२३ । स्वा३२३४दुः । मित्रा । यपूष्ण३भा३ । गा३४५योइ६हा यि(३) ॥ ८ † ॥ [३]

---

* ऊ० गा० ८प्र० २खं० १०गा० ।

† ऊ० गा० १०प्र० १खं० ८गा० ।

॥ वाजदावर्यम्॥ परिप्रधा। न्वा२ई२३४द्रा। या२सो२३४मा। स्वा२दूः। मा२३यित्रा। या२पू।॰ ष्णोभो२३४वा। गा५योई२३४वा॥(१) एवामृता। या२मा२३४दे। चा२या२३४या। स्वा२पू। क्षो२३ आ। षा२दायि। व्यःपो२३४वा। यू५षोई२३४वा॥(२) इन्द्रस्तेसो। मा२सू२३४ता। स्या२पे२३४यात्। क्ता२ त्वे। दा२३ता। या२वायि। स्वचो२३४वा। दा५ यिवोई२३४वायि(३)॥ ७*॥ [४]

॥ स्वर्निधनम्॥ परी३वोयि। प्रधा२३४न्वा। इन्द्रा३वो। यसो२३४मा। स्वादू३वोयि। मित्रा२३४या। पूष्णे३वोयि। भगा२३४या। पूर्णि भगाय। पूष्णा२३४३। वो३४३यि। भा३गा५या ई

* ऊ० गा० ११प्र० १ख० ७सा०।

५६ ॥(१) एवा३होयि । अमृता२३४या । मद्दे३होयि । च्चया२३४या । सम्र३हो । क्रोआ२३र्षा । दिव्या३हो यि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या३४३ः । हो३४३यि । पौ३यू५षा६५६ः ॥(२) इन्द्रा३हो । तेसो २३४मा । सुता३हो । स्पृ२३४यात् । क्रत्वे३होयि । दक्षा२३४या । विश्वे३होयि । चदा२३४यिवाः । विश्वे चदेवाः । विश्वे ३४३ । हो३४३यि । चा३दा५यिवा६५ ६ः । ए३ । सुवर्वर्त२३४५(३) ॥ ४* ॥ [५]

॥ वाजजित् ॥ परिप्रधन्वा । होवा३होयि । इन्द्रा यसोमा । होवा३होयि । स्वादुर्मित्राया । होवा ३ होयि । पूष्णेभगाया । होवा३होर । वा २ ३ ४औ होवा ॥(१) एवामृताया । होवा३होयि । मद्दे च्चया

---

* ऊ० गा० १४प्र० १ख० ४सा० ।

२ १ र २ १
या। होवा३होयि। सप्तुक्रोअर्षा। होवा३होयि।
र र २ १ ३ ५र र
दिव्यःपीयूषाः। होवा३होर। वा २ ३ ४ औहोवा ॥
१ र र १ १ र २
इन्द्रस्तेसोमा। होवा३होयि। सुतस्यपेयात्। होवा
१ र र २ १ र र
३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः।
२ १ ३ ५र र २र १र २र १र २र १
होवा३होर। वा२३४औहोवा। वाजीजिगीवाविश्वाध
३ १ १ १ १
ना२नो२३४५(२) ॥ ६* ॥ [६]

॥ पौष्कलम् ॥ परिप्रा३ध। न्याइ२३४न्द्रा। यसो।
२ १ ५ २ १ २र
मास्वा२३४दूः। मित्रा। या२३४५। पू६५६। ग्ना
१र २ १ १ १ १
गाया२३४५(१) ॥ १८† ॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

---

* ऊ० गा० १७प्र० २ष० ६सा०।

† ऊ० गा० ११प्र० १ष० १८सा०।

अथ तृतीय-खण्डे—

सूर्य्यस्येवेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ ० ३ १ १
सूर्य्यस्येवरश्मयोद्रावयित्नवो

३ १ २ ३ १ २ ३ १ २
मत्सरासः*प्रसुतःसाकमीरते।

१ २ ३ २उ ३ १ २ ३ १ ०
तन्तुन्ततम्परिसर्गासआशवो

१ २ ३ २ २ ३ २ ३ २ ३ २
नेन्द्राहतेपवतेधामकिञ्चन॥ १†॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तुं" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति। ते सोमाः "इन्द्रादृते" इन्द्रं वर्ज-यित्वा अन्यत् "किञ्चन धाम"‡देव शरीरं लक्षीकृत्य "न पवते"

---

* "प्रसुवः"—इति ऋ०-पाठः।

† ऋ० वे० ७, २, १२, १।

‡ 'इन्द्रं मुक्त्वा नान्यत् सोमस्य स्थापनमस्ति'—इति वि०।

न गच्छन्ति ॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयामीन्द्रस्य प्रिय-धामानि"—इति मन्त्र वर्णादवगम्यते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ ३ १ २ ३ १ ३ १ १ १
उपोमतिःपृच्यतेसिच्यतेमधु
१ १ २ ३ २ ३ १ १
मन्द्राजनीचोदतेअन्तरासनि ।
१ २ ३ १ २ ३ १ २ ३
पवमानःसन्तनिःसुन्वतामिव
१ २ ३ १उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति ॥ २* ॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [ पृची सम्पर्के ( दि० आ० ) ]। तथा "मधु" मद-करः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तु-भिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः ( अदा० आ० )—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [ आस्य-शब्दस्य "पद्दन्नोमासित्यादिना ( ६, १, ६३ ) आसन्नित्यादेशः ]। किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः"सुन्वताम्"अभिषुतवतां यजमानानां सम्बन्धिनी,

---

* ऋ० वे० ७, २, २१, २ ।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्ततिः कर्म-सन्ततिः एवं सोमस्य धारयेति'—इति वि० ।

"पवमानः" पूयमानः सोमः "द्रप्सः" द्रुत-गमन-शीलः "वारम्" अवि-वालमयं पवित्रं "परि" परितः "अर्षति" गच्छति। "इव" —इति पाद-पूरणः ॥

"सुन्वतामिव"—"प्रघ्नतामिव"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २
उक्षामिमेतिप्रतियन्तिधेनवो।
३१ २ ३१र २र ३ २
देवस्यदेवीरुपयन्तिनिष्कृतम्।
१ २ ३ १२ ३ १ १ ३ २ ३
अत्यक्रमीदर्जुनंवारमव्यय
२ ३ १ ३ २उ ३ १ २
मत्कन्ननिक्तम्परिसोमोअव्यत॥ ३* ॥ ९

"उक्षा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते [माङ् माने शब्दे च (ह्वा० आ०) तं वृषभं "धेनवः" गावः† "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उप यन्ति" उपगच्छन्ति [अनेनाहित-सोमः स्तुतिभिश्चाभिधीयते। सोमो हि द्रोणकलशाभिगमन-काले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभि गच्छन्ति। तथा सोऽयं

* ऋ० वे० ७, २, २१, ४।

† 'धेनवः'—धेट् पाने (भ्वा०प०), पिबन्त्युदकानि आदित्य-रश्मयः। अथवा '* * *'— इति वि०।

सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम्" अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" "अतिक्रामति [अतिक्रम्य पात्राणि गच्छतीत्यर्थः]। किञ्च सोमः "अत्कं न" आत्मीय-कवचमिव "निक्तम्" उज्ज्वलं अयण-द्रव्यम् "परि अव्यत" परितः संवृणोति ॥

"मिमेति"-"मिमाति"—इति पाठौ ॥ ३ ॥ ९

॥ वाजजित्॥ सूर्य्यस्येवा। रश्मयोद्रा। वयित्न वाः। होवा३होयि। मत्सरासाः। प्रसुतःसा। का मीरतायि। होवा३हायि। तन्तुन्तताम्। परिसर्गा। सा आशवाः। होवा३होयि। नन्दोहतायि। परतेधा। माकिञ्चना। होवा३होर। वा २ ३ ३ औहोवा॥(१) उरोमतायिः। पृच्यतेसायि। च्यातेमधू। होवा३हो यि। मन्द्राजनायि। चोदतेआ। तारासनायि। हो वाहोयि। पवमानाः। सन्तनिःमू। न्वातामिवा। हो वा३होयि। मधुमान्द्रा। सःपरिा। रामर्षतायि।

हौवा३होर२। वा२३४औहोवा॥२॥ उहामिमायि। तिप्रतिया। तौधिनवाः। हौवा३होयि। देवस्यदायि। वीरूपया। तीनिष्कृताम्। हौवा३होयि। अत्यक्र मायिन्। अर्ज्जुनम्वा। रामव्ययाम्। हौवा३होयि। अत्कन्ननायि। क्रम्परिसा। मोअव्यता। हौवा३हो २। वा२३४औहोवा। वाजोजिगीवाविश्वाधना२नौ२ ३ ४५॥२१*॥[१]

॥कावम्॥ हुव्योवा। स्वेवरस्मयोद्रा। वयित्वा वा२ः। मत्सरासः। असुतःसा। कमीराता२यि। तम्सुन्तमपरिसर्गा। सत्राग्नावा२३ः। नेन्द्रा३दार्त्ता यि। पवतायिधा२३। माका३यिच्चा५ना ६५६॥(१) उरोवा। मतिःपृच्यतेसायि। च्यतेमाधू२। मद्राज

* ऊ० गा० ६प्र० १ख० २१।०।

२ ३ २ २ ३ १ १ २
नीचोदतेश्रा। तरासाना २यि। पवमानःसन्तनिःरु।
२ ३ १ १ २ ४ ५ २ १
न्वतामायिवा२३। माधू३मान्द्रा। ष्पःपरायिवा २ ३।
२ २ ४ १ १ २
रामा३र्षापुताई५६यि॥(२) उच्चोवा। मिमेतिप्रतिया।
२ ३ १ १२ ३ ३ २ १
तिधेनवा २:। देवस्यदेवीरूपया। तिनिष्कार्त्ता २म्।
१ २ २ १ १ २ ४ ५
अत्यक्रमीदज्जनम्वा। रमव्याया२३म्। आत्का३न्नानी।
२ १ १ २ ४
त्कम्परायिसो२३। मोआ३व्यापुताई५६(३)॥११*॥[२]९

अग्निर्नरइति त्र्यचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

३ २उ ३ १ २ ३ २ ३
अग्निर्नरो दीधितिभिररण्यो
१ २ ३ २
र्हस्तच्युतञ्जनयत प्रशस्तम्।
३ १ २ ३ १ २ ३ २
दूरेदृशङ्गृहपतिमथव्युम्॥ १‡ ॥

---

* ऊ० गा० ९प्र० २ख० ११सा०।

† 'अग्निर्नः—एतदग्निष्टोमसाम। वामदेव्यम्'—इति वि०।

‡ ऊ० आ० १, २, २, १० (१भा० २१५ पृ०) = ऋ० वे० ५, ९, ३३, १।

हे "नरः" नेतार ऋत्विजः! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम् "अथर्युम्" अगम्यम् अतनवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युतं" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयन्त" उत्पादयन्त ॥

"हस्तच्युतञ्जनयन्त"-"हस्तच्युतोजनयन्त"—इति पाठौ, "अथर्युम्"-"अथर्य्युम्"—इति च ॥ १ ॥

अथ द्वितीया।

२ ३ १उ ३ १ २ ३उ २र
तमग्निमस्तेवसवोन्यृण्वन्त्

३ २ ३ १ २ ३ १ २
सुप्रतिचक्षमवसेकुतश्चित्।

३ २ ३ १उ ३ २ ३ १ २
दक्षाय्योयोदमआसनित्यः ॥ २* ॥

"यः" अग्निः "दमे" गृहे गृहे "दक्षाय्यः" पूजनीयो हविर्भिः समर्द्धनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृण्वन्" न्यदधुः ॥ २ ॥

---

* ऋ० वे० ५, १, १३, २।

† विवरण-नये आसनित्य इत्येकं पदम्, तथाहि—'आसनित्यः—आसमासनं नित्यं यजमान-गृहे यस्य'—इति तद्व्याख्यानम्। विवृतञ्चैतत् पदकारादीनाम
१ २र १ २र
'आस। नित्यः"—इति दर्शनात्, बहुव्रीहि-स्वरात्तु तेषं ति विचार्यम्।

अथ तृतीया।

१ २   ३ १र २र ३ १र<br>
प्रद्धो अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ।<br>
१र २र ३ १ २ ३ १ २<br>
त्वाꣳ शश्वन्त उपयन्ति वाजाः॥ ३* ॥ १०

हे "यविष्ठ" युवतमाग्ने! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अमरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयायने "दीदिहि" दीप्यस्व। "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति† ॥ ३ ॥ १०

---

* ऋ० वे० ५, १, २२, ३ = य० वे, १७, ७६।

† अत्रेयं महीधर-व्याख्या —"हे 'यविष्ठ!' [अतिशयेन युवा यविष्ठः। अतिशायने तमबिष्ठनौ, स्थूलदूरयुवेत्यादिना व-लोपे पूर्वगुणः] हे युवतम! हे 'अग्ने!' त्वं 'नो'ऽस्माकं 'पुरो' अग्रे 'दीदिहि' दीप्यस्व [दीव्यतेर्विकरण-व्यत्ययेन जुहोत्यादित्वात् शपः श्लौ द्वित्वम्, तुजादीनामिति पूर्व-दीर्घः]। किम्भूतस्त्वम्? 'अजस्रया' अनुपक्षीणया 'सूर्म्या' समित्काष्ठेन 'प्रेद्धः' प्रकर्षेण दीप्तः [सूर्मी शब्दः काष्ठ-वाचकः; यद्वा, लोहमयी ज्वलन्ती स्थूणा सूर्मी। अजस्रया सूर्म्या सूर्मी-समानया ज्वालया दीदिहि। सूर्मी-शब्दो ज्वालोपलक्षकः]। हे अग्ने! यतः शश्वन्तो निरन्तर-भाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः"—इति।

आयङ्गौरिति त्वचात्मकं तृतीयं सूक्तम्,*

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २ ३ २
आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः।
३ १ २ ३ १ २
पितरञ्चप्रयन्त्स्वः॥ १† ॥

"गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति [सदेश्छान्दसो लुङ्, लृदित्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च"-शब्दादन्तरिक्षञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः शोभन-गमनो भवति [यद्वा, पितरं स्वर्द्युलोकं प्रयन् वर्त्तते] ॥ १ ॥

---

* 'उक्तमग्निष्टोमसाम। इदानीं मानसं स्तोत्रं भवति। * * *। मनसाभिहिङ्करोति। मनसोद्गायति। मनसा प्रतिहरति। मनसा निधनमुपयन्ति। एतन्मानसं येनात्यग्निष्टोमायङ्गौः पृश्निरक्रमीदिति'—इति वि०।

† ऋ० सा० प० ३, ५, ४ (२भा० ३४३ पृ०) = ऋ० वे० ८, ८, ४७, १ = य० वे० ३, ६।

अथ द्वितीया।

२ १ २    २ २उ  ३ १ २  ३ २
अन्तश्चरति रोचनास्य प्राणादपानती।
१र २र   ३ १र   २र
व्यख्यन्महिषो दिवम्॥ २*॥

"अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीर-मध्ये मुख्य प्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्य-प्राणस्य प्राणाद्या वृत्तयः, तत्र प्राणनं नाड़ीभिरूर्द्धं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नमनं तत् कुर्वती, [अप-पूर्वादनितेः लटः शतृ, अदादित्वाच्छपोलुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, 'अन्तर्' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति। रुच दीप्तौ (भ्वा० आ०), 'अनुदात्तेतश्च हलादेः (३, २, १४९)"—इति युच्। किङ्कुर्वती? 'प्राणात्' प्राणनात् उदयादनन्तरम् 'अपानती' सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः] अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यन्" विचष्टे प्रकाशयति॥ महिषः—महेः "अविमह्योष्टिषच् (उ० १, ४५)"—इति

---

* ऋ० आ० प० १, १, ५ (२भा० ३, ४६) = ऋ० वे० ८, ८, ४७, २ = य० वे० ३, ७।

औणादिकः ष्टिषच् प्रत्ययः । व्यत्यन्—“चक्षिङः ख्याञ् (२, ४, ५४)”, छान्दसे लुङि “अस्यतिवक्ति (३, १, ५२)”—इत्यादिना च्लेरङादेशः ॥ २ ॥

अथ तृतीया ।

२ १उ ३ १ २ ३ १ २ ३१ २
त्रिꣳशद्धामविराजतिवाक्पतङ्गायधीयते ।
२ ३ २ ३ २ ३ १ २
प्रतिवस्तोरहद्युभिः ॥ ३* ॥ ११

“त्रिंशत्” “धाम” धामानि स्थानानि [वचन-व्यत्ययः (३, १, ८५)] “वस्तोः” वासरस्याहोरात्रस्यावयवभूतानि “अह” [शब्दोऽवधारणे] “द्युभिः” सूर्य्यस्य दीप्तिभिरेव “वि राजति” विशेषेण दीप्यन्ते [व्यत्ययेनैकवचनम् (३, १, ८५)। मुहूर्त्तान्यत्र धामान्युच्यन्ते ; पञ्चदश रात्रेः, पञ्चदशाह्नः]। “पतङ्गाय” [पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै] सूर्य्याय, स्तुतिरूपा “वाक्” “प्रति धीयते” प्रतिमुखं धीयते प्रतिमुखं स्तोतृभिर्विधीयते क्रियते [यद्वा, ‘वस्तोः’ अहनि ‘त्रिंशद्धामानि’ घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः ; “अत्यन्त-संयोगे द्वितीया (२, ३, ५)”। एतावन्तं कालं ‘द्युभिः’ दीप्तिभिः असौ सूर्य्यो ‘वि राजति’ विशेषेण दीप्यते, तस्मिंश्च समये ‘वाक्’ त्रयीरूपा ‘पतङ्गाय’ ‘प्रतिधीयते’ प्रतिमुखं धीयते तं सूर्य्यं सेवत

* ऋ० खा० प० ३, ५, ६ (२भा० ३४९पृ०) = ऋ० वे० ८, ८, ४७, ३ = य० वे० ३, ८।

इत्यर्थः। श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ ३ ॥ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

॥ इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ † ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

———ooo———

---

* 'समाप्तश्चायं द्वादशाहः सत्रात्मकोऽहीनात्मकश्च' —इति वि०

† 'षष्ठस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः' —इति वि०।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ द्वादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथमखण्डे उपप्रयन्त इति चतुर्ऋचं प्रथमं सूक्तम्†—

तत्र प्रथमा।

२ १ २ ३ १र २र ३ १ २
उपप्रयन्तो अध्वरम्मन्त्रं वोचेमाग्नये।

३ २ ३ १ २ ३ १
आरे अस्मे च शृण्वते ॥ १‡ ॥

---

* 'इदानीं गवामयनं संवत्सरं सत्रमुच्यते। तत्रादौ ज्योतिष्टोमोऽतिरात्रः पुनः प्रायणीयमहरं तदुक्थम्। पुनश्चत्वारोऽभिप्लवाः। पृष्ठः षडहः समाप्तः। स द्वितीयः तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाः षडहाः पृष्ठः षडहस्तथापि ह्यारम्भश्चत्वारोऽभिप्लवाः समाप्ताः। स द्वितीयः स तृतीयः स चतुर्थः त्रयोऽभिप्लवाः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहानि महाव्रतमतिरात्रश्च संवत्सरस्यैतद् ब्राह्मणम्। अथास्य परिमाणं सषष्ठ्यानि त्रीणि शतानि। एकादशाष्टषष्ठाः पञ्चचत्वारिंशदभिप्लवाः अभिजित् तत्राद्यं गायत्रौ आयुषौ द्वादशाहस्य दशाहानि अतिरात्रः। चतुर्विंशत्या सह षष्ठो मासः पूर्वस्मिन् पक्षसि मतातिरात्राभ्यां प्रथम उत्तरास्मिन् गवामयने अतिरात्रमीरितम् अध्याय-परिसमाप्तेः ब्राह्मणोक्तानि आर्षच्छन्दोदैवतानि। इदानीं तेषां साम्नां योनीयाः ते वक्तव्या इत्येवमारभ्यते'—इति वि०।

† 'आग्नेयमाख्यम्'—इति वि०।

‡ ऋ० वे० १, ५, ९, १ = य० वे० ३, ११।

"अध्वरं" हिंसा-प्रत्यवाय-रहितम् अग्निष्टोमादि-यज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्राप्यविच्छेदेन सम्यगनुष्ठितवन्त इत्यर्थः। तादृशा वयम् "अग्नये" अङ्गनादि-गुण-युक्ताय देवाय "मन्त्र" मनन-साधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो भूयास्म इत्याशास्यते। कीदृशायाग्नये? "अस्मे च शृण्वते" च-शब्दोऽप्यर्थे आरे-शब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृण्वते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः। [वोचेम—ब्रुवोवचिः (२, ४, ५३), लिङ्याशिष्यङ्, "वच उम् (७, ४, २०)"—इत्युमागमः। शृण्वते—"शतुरनुमः (६, १, १७३)"—इति विभक्तेरुदात्तत्वम्॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २ ३ १ २
यःस्नीहितीषुपूर्व्यःसञ्जग्मानासुकृष्टिषु।
१ २ ३ २ ३ १ २
अरक्षद्दाशुषेगयम्॥ २* ॥

"पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" वधकारिणीषु "कृष्टिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीषु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षति†। तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः। [स्नीहितीषु—

---

* ऋ० वे० १, ५, २१, २।

† 'गयं प्राणम् यद्यपि सर्वासु मनुष्यजातिषु वनाहृदयान्तःस्थितं ज्योतिः तथापि ये यजमानाः तेषां गयान् प्राणान् रक्षति'—इति वि०।

णिह स्नेहने चुरादिः; "स्नेहयति"—इति वध-कर्मसु (निघ० २, १९, १३) पठितम्; स्निह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नेहितवः करणे "सितनिगमि (उ० १, ६९)"—इत्याद्यौणादिकः "तितुत्रेष्वग्रहादीनाम् (७, २, ९ वा०)"—इति वचनात् निगृह्णीतिनिपतितिवदिडागमः व्यत्ययेनैकारस्य ईकारः, क्विनोदीर्घस्य; नित्त्वादाद्युदात्तत्वम्। सञ्जग्मानास—"समोगमि (१, ३, २९)"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः। अरचत्—"छन्दसि लङ्लुङ्लिटः (३, ४ ६)"—वर्त्तमाने लङ्॥ २॥

अथ तृतीया।

१ २ १ २ ३ १ २ ३ १ २ ३ १ २
स नो वेदो अमात्यमग्नी रक्षतु शन्तमः।
३ २उ ३ १ २
उतास्मान्पात्वंहसः॥ ३*॥

"सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"† अन्तिके भवं सहभूतं वा "रक्षतु" शत्रोः सकाशात् पालयतु। कीदृशः? "शन्तमः" सुखतमः "उत" अपिच "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु॥

"शन्तमः"—"विश्वतः"—इति पाठो॥ ३॥

---

* ऋ० वे० ५, २, १८, ३।

† 'अमत् प्राणः, प्राणनं च्यवावस्थितं भवति'—इति वि०।

अथ चतुर्थी।

२ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २

उतब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि।

३ १२ ३२

धनञ्जयो रणेरणे ॥ ४* ॥ १

"अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु। कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणेरणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रु-धनानां जेता† ["सञ्ज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः। रणेरणे—रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः ["वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८, १, ४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम् ॥ ४ ॥ १

अथाग्नेयुङ्क्ष्वाहीति तृचात्मकं द्वितीयं सूक्तम्‡,

तत्र प्रथमा।

१ २ ३ १२ २२ ३ १ २

अग्ने युङ्क्ष्वा हि ये तवाश्वासो देवसाधवः।

२ ३ १ २ ३ १ २

अरं वहन्त्याशवः ॥ १¶ ॥

---

* ऋ० वे० १, ७, ११, १।

† 'धनञ्जयः—अग्निधनानां जेता'—इति वि०।

‡ 'अग्निष्टोम साम'—इति वि०।

¶ छ० आ०, १, १, ३, ५।१ भा०१३३४०,=ऋ० वे० ४, ५, २९, २।

हे "देव" द्योतमानाग्ने ! तान् अश्वान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्य्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः ॥

"युङ्क्ष्व"-"युङ्क्ष्वा"—इति पाठौ, "आशवः"-"मन्यवः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र ३ १ २
अच्छानोयाह्यावहाभिप्रयाᳬसिवीतये।

२ ३ १र २र
आदेवाᳬसोमपीतये ॥ २* ॥

हे अग्ने ! "नः" अस्मान् "अच्छ" आभिमुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्यन्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम् ? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोमपानार्थञ्च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
उदग्नेभारतद्युमदजस्रेणदविद्युतत्।

२ ३ १ २
शोचाविभाह्यजर ॥ ३† ॥ २

---

* ऋ० वे० ४. ५, २९, ४।

† ऋ० वे० ४. ५. २९, ५।

हे "भारत" हविषां भर्त्तरग्ने ! * "उत् शोच" उद्गततरं दीप्यस्व। तदेव विवृणोति— हे "अजर" जरा-रहिताग्ने ! "दविद्युतत्" भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति ( ७, १, ३९ ) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि" विशेषेण प्रकाशयस्व [ यद्वा, भाति रन्तर्णीत-ण्यर्थः। त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम ] ॥ ३ ॥ २

अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र

प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

२ ३ १ २ ३ १ २ ३ २ ३ १र २र

अपश्वानमराधसꣳहतामखन्नभृगवः ॥ १‡ ॥

"सुन्वानाय" सुन्वानस्याभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म-विघ्नकारी श्वा "न वष्ट" [वश कान्तौ (अदा० प०) —इति धातुः] न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः! "राधसं" साधक-धर्म-रहितं "श्वानम्" "अपहत"।

* 'भारत—भरतामनुषाणां निर्मथिताग्ने'—इति वि०।

† रतामीमाभिन्नविक्रमच्यते'—इति वि०।

‡ ऋ० आ० ६, २, १, ९ (२ भा० १९८ पृ०) = पुनरत्रैव पुरस्तात् १, २, २०, २ (३ भा० २९० पृ०) = ऋ० वे० ७, ५, ३, ३।

तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखं एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः॥

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"हत"—इति च॥१॥

अथ द्वितीया।

२ ३ १र २र ३ २उ ३ १ ३ १र
आजामिरत्केअव्यतभुजेनपुत्रओण्योः।
१ २ ३ १र २र ३ १र २र ३ १ २
सरज्जारोनयोषणांवरोनयोनिमासदम्॥२*॥

"जामिः" बन्धुभूतो देवानां† सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बन्धी भवति। तत्र दृष्टान्तः—"भुजे न" यथा "ओण्योः" रक्षकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत्। ततः सोऽयं सोमो "योनिं" स्व-स्थानभूतं कलशम् "आसद" आसत्तुं "सरत्" सरति। तत दृष्टान्तद्वयम्—"जारो न" यथा जारो "योषणा" असतीं स्त्रियं प्राप्तुं सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत्॥२॥

अथ तृतीया।

२ ३ १ २ ३ १ १ ३ २उ ३ १ ३ १ २
सवीरोदक्षसाधनोवियस्तस्तम्भरोदसी।
१ २ ३ १ २ ३ १र २र ३ १ २
हरिःपवित्रेअव्यतवेधानयोनिमासदम्॥३‡॥३

* ऋ० वे० ७, ५, ३, ४।

† जामिः—सोमस्य भगिनी'—इति वि०।

‡ ऋ० वे० ७, ५, ३, ५।

"दक्षसाधनः" बल-साधनः "सः" सोमः* "वीरः" समर्थो भवति, "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्व-तेजसा व्यस्तत्वात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरित-वर्णः सोमः "वेधा न" यथा विधाता यजमानः स्व-गृहमासीदति, तद्वत् "योनिं" स्व-स्थानं कलशम् "आसदम्" आसत्तुं पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥ ३ ॥ ३

॥ महागौरीवितम् ॥ प्रसु। त्वानाइ। यअन्धसाः। मर्त्तानवष्टतद्वचार२३ः। आपश्वानाइ१२३म्। अराऽ५ध साम्। धातामखाइ१ २ ३म। नभोवा। गा५वो ६ धाइ(१)॥ १७† ॥ [१]

॥ गौतमम् ॥ प्रसुत्वानायअन्धसाः। मर्त्तानवो। ष्टतद्वचार२ः। अपा। औहोर२३४वा। आनमराधसा

* 'सः—सोमः प्रजापतिः नृपो वा'—इति वि०।

† ऊ० गा० १प्र० २अ० १७सा०।

२३४५म्। हता। औहो२३४वा। मखा। औहो२३४वा। नभूपगवाः। होइ। डा(१)॥ १८* ॥ [२]

॥ महागौरीवितम्॥ प्रसु। न्वाना३। यअन्धसाः। मर्त्तोनिवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अरापध साम्। हातामखा३१२३म्। नभोवा। गापवो६हा यि॥(१) आजा। मिरा३। त्का अव्यता। भुजेनपुत्र ओणियो२३ः। सारज्जारा३१२३ः। नयोपषणाम्। वारो नयो३१२३। निमोवा। सापदो६हायि॥(२) सवी। रादा३। त्ससाधनाः। वियस्तस्तम्भरोदसा २ ३ यि। हारिःपवा३१२३यि। त्रे आपव्यता। वायिधानयो३१२३। निमोवा। सापदो६हायि(३)॥ १७† ॥ [३]

---

* ऊ० गा० १प्र० २ख० १६सा०।

† ऊ० गा० ६प्र० २ख० १७सा०।

५र ४ १२४र ५ २ १
॥ ओकोनिधनम् ॥ आजा३मिरत्केअव्यता । भुजा
१ १ र र १
यि । नपुत्त्रओ२णायो ३: । सरञ्जारोनयो२षाणा२
१र ५ २ १र ३ ५र र
म् । वरोना२३४ये । निमा । सा२दा२३४औहोवा ।
३ ५
ओ२३४का:(२) ॥ १८* ॥ [४]

१ २र र १ १ २ १
॥ औद्दलम् ॥ सवोरोदा । चामा२धना: । वियस्त
२ १ २ ३ ५ १ २
स्ता३ । भारोदा२३४सायि । हरि:पवायि । चे आ२
१ २र १र २ १ ४ २
व्यता । वेधाना२३ये३ । ना२३यिमा३ । सा३४५दो
५
६हायि(३) ॥ १९† ॥ [५]

५ २ ४र ५ ४ ५ २ १र २ १
॥ साध्रम् ॥ प्रसुन्वा३नायअन्धस: । मर्त्तोनवा२ ।
३ २ ३ ५ १ २ १र २र १ २ १ १ १ १
ष्टता३४५त् । वा२३४चा: । अपश्वानमराधसा२३४५म् ।
१ २ ३ १ १ २ ३ ५ ४
हाताओ२३४वा । माखाओ२३४वा । नभृगवा: ॥(१)
५र र २ ४ ५र ४ ५ २ १ २ १ ३ २
आजामा३यिरत्के अव्यता । भुजायिनपू२त् । चओ३

* ऊ० गा० ६प्र० २अ० १८सा० ।
† ऊ० गा० ६प्र० २अ० १९सा० ।

४५। णो२३४यो:। सरज्जारोनयोषणा२३४५म्। वा
राओ२३४वा। नायाओ२३४वा। निमा५सदाम्॥(२)

सवीरो३दत्तसाधनाः। वियास्तस्तार। भरो३४५। दा
२३४सो। हरिःपवित्रेअव्यता२३४५। वायिधाओ२३४
वा। नायाओ २ ३ ४ वा। निमा५सदाम्। हो५ई।
डा(३) ॥ २०* ॥ [६]

॥ गौतमम् ॥ आजामिरत्केअव्यता। भुजायिनपूत्।
चओणियोर:। मरा। औहो२३४वा। जारोनयोष
णा२३४५म्। वरा। औहो२३४वा। नाया। औहो
२३४वा। निमा५सदाम्। हो५ई। डा(२) ॥ २१† ॥ [७]

॥ श्यावाश्वम् ॥ प्रसू३१। न्वा३ना। यज्ञ। धा३स:।
एहिया। मा। तोनवष्टा। तत्। वचा२:। एहिया२।

* ऊ० गा० ६प्र० २ख० २०सा०।
† ऊ० गा० ६प्र० १ख० १सा०।

१२ २ ४ ५ १२ १२
अपस्वानामा३रा३। धा२३४साम्। ऐहा २यि। एहि

२१ २ ४ २४
या २। हतामखान्ना३भू३। गा३५वा६हायि॥ २* ॥ [८]

१२ २ १ १ २१२
॥ औद्‌लम्॥ प्रसुन्वाना। या‌आ २न्धसाः। मर्त्ती

२ १ २ ३ ५ १ १ २ १
नवा३। ष्टातदा२३४न्नाः। अपस्वानाम्। आरा २ध

१ २ १२ २ १ ४ २
साम्। हतामा२३खा३म्। ना२३भू३। गा३४५वो६

५ १२ २२ १ १ २ १२ २
हायि॥ १) आजामिरा। त्कआ २व्यता। भुजेनपु३

१ २ ३ ५ १ २ २ १ १
त्। आओणा२३४योः। मरञ्जाराः। नायो २षणाम्।

२ १२ २ १ ४ ५ ५
वरोना२३योर३। ना२३यिमा३। सा३४५दो६हायि॥(२)

१ २२२ १ १ २ १ २ १ २ ३
सवीरोदा। चासा २धनाः। वियस्तस्ता३। भारोदा

५ १ २ १ १ २२१२
२३४सायि। हरिःपवायि। ऐआ २त्यना। वेधाना२३

२ १ ४ ५ ५
योर३। ना२३यिमा३। सा३४५दो६हायि(३)॥ २† ॥ [९]

---

* ऊ० गा० ११प्र० २ख० २गा०

† ऊ० गा० ११प्र० २ख० ३सा०।

॥ गौतमम् ॥ प्रसुन्वानायअन्धसा: । मर्त्तोनवा । ष्टतद्वचार: । अपा । औहोर३४वा । श्वानमराधसा २३४५म् । हता । औहो२३४वा । मखा । औहो२३४वा । नभृ५गवा: ॥(१) आजामिरत्केअव्यता । भजा यिनपूत् । त्रओणियो२: । सरा । औहो २ ३ ४ वा । जारोनयोषणा२३४५म् । वरा । औहो२३४वा । नया । औहो२३४वा । निमा५सदाम् ॥(२) सवीरोदक्षसाधना: । वियास्तस्ता । भरोदसाराय । हरा । औहो२३४वा । पविचेअव्यता२३४५ । वधा । औहो२३४वा । नया । औहो २ ३ ४ वा । निमा५सदाम् । हो५ई । डा(३) ॥ १३* ॥ [१०]

॥ आकूपारम् ॥ प्रसुन्वा२३नाय । अन्धा२३४सा: ।

---

* ऊ० गा० ११प्र० २अ० १६सा० ।

१ १ २ १ २ १ र १
मर्त्तो२नवा । ष्टतद्वचाः । अपश्ना२म् । अराध-

२ र १ १ ४ २ ४
साम् । हतामाखा२३म् । ना२३भू३ । गा३४५वो६हा

२र १र ४५र २ ३ ५ १
यि ॥(१) आजामा२३यिरत्के । अव्या२३४ता । भुजा

१ २ र १ २ १ र १
रयिनपूत् । चओ१णियोः । मरज्जा२रो२ । नयोषणाम् ।

२ र १ १ ४ २ ५
वरोनायो२३ । ना२३यिमा३ । सा३४५दो६हायि ॥(२)

२ १र ४ ५ २र ३ ५ १ १ २ र
सवीरो२३दच्च । माधा२३४नाः । विया२स्तस्ता । भरो

१ २ १ र १ २र र १
दसायि । चरिःपावा२यि । चे अव्यता । वेधानायो

१ ४ २ ५
२३ । ना२३यिमा३ । सा३४५दो६हायि (३) ॥ १६*॥[११]

३ ५ र र २ ३ ४
॥ दैवोदासोत्तरम् ॥ प्रा४सुन्वाना । चो । यअन्ध

५ ५ २ र र र १ २ ४ ५र
सा६ए । मर्त्तानवष्टतद्वचोअपश्वानमराधा३माम् । हता

३ २ ५र र ३ ५ ३
मखा३४ । औचोवा । ना२३४भू । गवो२३४५ई ।

डा(३) ॥ १४† ॥ [१२]

---

* ऊ० गा० १५प्र० १अ० १६सा० ।

† ऊ० गा० १६प्र० १अ० १४सा० ।

१ २र र १ २ १' र
॥ भृद्वाभृद्वीयम् ॥ प्रसुन्वानायअन्धसा: । मर्त्तो

२ १ २ १ र २ १ १र २ १र
नवष्टतद्वार२३चाः । अपश्वानमराधार२३साम् । हतामा

२ १ २ २ ५र र २ १ १ १ १
२३खा३म् । नार । भृगा३४औहोवा । वा२३४५: ॥(१)

१र २र १ २र १ २ १ र २ १र २ १
आजामिरत्के अव्यता । भुजेनपुत्रओणार२३यो: । सर

र र २ १र २ १र २ १
ज्जारोनयोषार२३णाम् । वरोनार२३योर । नार२३यो

१ २र २ ५र र २ १ १ १ १
३। नार२यिम् । आसा३४औहोवा । दार२३४५म् ॥(२)

१ २र १र २ १र २ १ २ १र २ १
सवीरोदक्षसाधनाः । वियस्तम्भरोदार२३सायि । हरिः

२र १ २ र १र २ १ २र
पवित्रे अव्यार२३ता । वेधानार२३योर । नार२यिम् । आ

२ ५र र २ १ १ १ १
सा३४औहोवा । दार२३४५म् ३ ॥ १७* ॥ [१३]

३ ४ र र २ १ ५ २ २
॥ वैश्वामित्रम् ॥ प्रसुन्वानायअन्धसः । मर्त्तोनार२३४

५ २ १ २ २ १ २ र १ २ १
वा । ष्टा३ताद्वा३चाः । आपश्वानार२३ऽवा३यि । अरा

२ ५ १ १र २ ५ ४
२धार ३ ४साम् । हतामाखोवाओ२ ३ ४वा । नभृ५ग

* ऊ० गा० १८प्र० १ख० १०सा० ।

१ २र ४र २र ४ ५ २ ३ ५
वाः ॥(१) आजामिरत्के अव्यत । भुजायिनार २ ४पू ।
२ १ १ २ १ २ र १ २ १ ३
वा३ओणा३यो: । सारज्जारा२३ह्वा३ । नयोरषार २ ३ ४
५ १ २र ३ ५ ४
णाम् । वरो । नायोवाओ२३४वा । निमा५सदाम् ॥(२)
२४ र २र ४ ५ २ ३ ५ २ १ २ १
सवोरोदक्षसाधनः । वियास्ता२३४स्ता । भा३रोदा३सा
१ २ १ २ १ ३ ५
यि । हारि:पवा २ ३यिहा ३ यि । नेआर२व्या२ ३ ४ता ।
१ २र ३ ५ ४ ४
वेधाः । नायोवाओ२३४वा । निमा५सदाम् । होपू
ई । डा(३) ॥ १८* ॥ १४

२ र र २ १ र
॥ स्वारकौत्सम् ॥ प्रसुन्वानायाउअन्धसा: । मर्त्तोन
१ २ २ र १ १२ १
वष्टता१हा३वा: । अपस्वाना३म् । आ३राधा३साम् ।
१ र ३ ५ ३ १ ४
आऽ२यि । हतामखो२३४हायि । नभृ३गा५वा६५६ ॥(१)
२र र २ १ र २ २ २
आजामिरत्के३अव्यता । भुजेनपुत्र ओ१णा३यो: । सर
र २ १२ १ १ र २
ज्जारो३ । ना३योषा३णाम् । आऽ२यि । वरो नयोर२३

* ऊ० गी० १८प्र० २ख० १८सा० ।

४ह्वायि। निमा३मा५द्वा६५६॥(२) सुवीरोदक्षा३साधना:। वियस्तस्तम्भरो१दा३सायि। हरि:। पवा३यि। त्रे३आव्या३ता। आ२यि। वेधानयो२३४ह्वायि। निमा३मा५द्वा६५६म्(३)॥२०*॥१५

॥ उरुक्षयम्॥ प्रसुन्वानायअन्धसः। मर्त्तोनवष्टतद्वा२३चा:। अपश्वानमराधा२३साम्। हतामखा२म्। ना२भृ। गा२। या२३४औहोवा। वा२३४औहोवा। वा२३४५:॥(१) आजामिरत्केअव्यता। भुजेनपुत्रओणा२३यो:। सरज्जारोनयोषा२३णाम्। वरोनयो२। ना२यिमा। सा२। या२३४औहोवा। दा२३४५म्॥(२) सवीरोदक्षसाधना:। वियस्तस्तम्भरोदा२३सायि। हरि:पवित्रेअव्या२३ता। वेधानयो२।

* ऊ० गा० १८प्र० १ख० २०मा०।

नाऽ २ यिमा । माराया २ ३ ४ औहोवा । हा २ ३

४ ५म्(३) ॥ २१* ॥ [१६]

॥ काण्वरथन्तरम् ॥ प्रासुन्वानायअन्धसा: । मर्त्तानवा ।

ष्टाश्तादाश्चाः । अपश्वानमराधसा२३४मैहो । हता

मा२३४खाम् । नभृ३आउवा२३ । ए३ । गवआ ॥(१)

आजामिरत्केअव्यता । भुजेनपूत् । चाश्ओणाश्योः ।

सरञ्जारोनयोषणा२३३मैहो । वरोना२३४यो । निमा३

१उवा२३ । ए३ । सदमा ॥(२) सावीरोदचसाधनाः ।

वियस्तस्ता । भाश्रोदाश्सायि । हरि:पवित्रेअव्यता

२३४ऐहो । वेधाना२३४यो । निमा३१उवा२३ । ए३ ।

सदमा(३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० १९प्र० २ख० ११सा० ।

† ऊ० गा० २२प्र० २ख० ७सा० ।

अथ द्वितीय-खण्डे—

अभ्रातृव्य इति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १ ३ १ २र ३ २ ३ ३ १ २
अभ्रातृव्यो अनात्वमनापिरिन्द्र जनुषा सनादसि।
३ २ २ ३ १ २
युधेदापित्वमिच्छसे ॥ १* ॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः [ "ऋतश्छन्दसि (५, ४, १५८)"-इति कपः प्रतिषेधः ] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्वं" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखा भवसि ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २र
नकी रेवन्तꣳ सख्याय विन्दसे पीयन्ति ते सुराश्वः।
३ १ ३ १ २ ३ १ २र ३ २ ३ १ २
यदा कृणोषि नदनुꣳ समूहस्यादित् पितेव हूयसे ॥ २† ॥ ४

* ऋ० आ० ५, १, २, १ (१भा० ८१६४०) = ऋ० वे० ६, २, ३, ४।
† ऋ० वे० ६, २, ३, ५।

हे इन्द्र ! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार मा(ता)दृशमन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यत आह—"सुराश्वः" [ टु ओ श्वि गति-वृद्ध्योः ; सुरया वृद्धाः तद्वत् ] पर्मत्त-नास्तिकाः । "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तवाश्रयतीत्यर्थः । "यदा" त्वं "नदनु" [ नद अव्यक्ते शब्दे ( भ्वा॰ प॰ ) ] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि । "आदित्" अनन्तरमेव तेन लब्ध-धनेन स्तोता "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः ॥ २ ॥ ४

॥ उत्थामन्दीयवम् ॥ अभ्रातृ३व्योअनातुवाम् । अनापा१यिरा२यि । इजनुषासना२३दसायि । यूधेदापायि । त्वंमा२३यिच्छसाउ । वा३ ॥(१) युधेदा३पित्वमिच्छसायि । नकायिरा१यिवा२ । न२३सखियायवा२३यिन्दसायि । पायियन्तितायि । सुरा२.३श्र्वाउ । वा३ ॥(२) पीयन्ता३यितेसुराश्र्वाः । यदाक्रा१णो२ । षि

तदनु१ममू२३हसायि। आदित्यितायि। वङ्र२३यमा

 १र १११

उ। वा३। स्तोषे३४५(३)॥ १०*॥ ४

आत्वासहस्रमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

१ २ १२ ३ २ ३२ ३ १ २र ३ १ २

आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।

३ २३१२ ३ २ ३१२३ १ २

ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये॥ १‡॥

हे "इन्द्र!" "त्वा" त्वां "सहस्रं" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदेनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह—युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व (६, ४, १७५)"—इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूना मश्वाना शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

* ऊ० गा० ७प्र० १ख० १८सा०,

† 'अभीवर्त्तं स्तोत्रीयम्'—इति वि०।

‡ ऋ० सा० ३, २, २, २१ (१भा० ५०५पृ०) = ऋ० वे० ५, ७, १४, ४।

युजः" ब्रह्मणा परिवृढेणेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ २ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।
२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यौ विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना ताविवेन्द्र मावहतामिति प्रार्थ्यते—]"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति (७,१,३९) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्राप्तव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

---

* ऋ० वे० ४, ७, १४, ५।

† 'शितिपृष्ठौ—नीलपृष्ठौ'—इति वि०।

‡ 'अतिशयेन विवक्षितभूतस्य'—इति वि०।

अथ तृतीया।

२ ३ १ १ २ ३ १ २ ३ १ २

पिबा त्वा३ऽस्य गिर्वणः सुतस्य पूर्वपा इव।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २

परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपा इव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सह्यैन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१,१३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'आसुतिरापन्निरित्यर्थः'—इति वि०।

॥ अभीवर्त्तम् ॥ आत्वा३ता२द्दन्नमाश्रतोवा । यूक्ता

रथे । द्धिराण्या१या२यि । ब्राह्मयुजौ३१२३४ । द्दरय

इ । न्द्रकायिश्रा१यिना२ः । वद्दान्त्व१सोर२ । मपा३यि ।

ता२३४५यि ॥(१) आत्वा३रा३थायिद्धिरण्ययोवा । द्दारी

मयू । रश्रायिपा१या२ । यितिपृष्ठा३१२३४ । वद्दता

म्माभ्वोआन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता

२३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा ।

द्दुतस्यपू । वपाआ१यिवा२ । पारिष्कृता३१२३४ । स्य

रसिनइ । यमाद्द१ता२यिः । चारुम्मा१दा२ । यपा३ ।

त्या२३४५ । ता२३४५यि(३) ॥ १५* ॥ १

॥ भारद्वाजम् ॥ आत्वासहा । स्रमाश्रा १ ता२म् ।

यूक्तारथेद्धिरण्यये । ब्रह्मायू१जा२ः । द्दारयइ । न्द्रका

* ऊ० गा० ७प्र० १ख० १५सा० ।

यिग्नाश्यिना२ः । वद्दान्तू१सो२३ । मा२पा२३४औहो
वा । ता२३४ये ॥(१) आत्वा२थायि । हिरा१ण्या१या२
यि । हारीमयूरशेप्या । ग्निनायिपा१ष्ठी२ । वाहता
म्म । ध्वोआन्धा१सा२ः । विवाहा१णा२३ । स्थार२पा२
३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वा
१णा२ः । द्दतस्यपूर्वपाइव । परायिष्का१र्त्ता२ । स्यार
सिनद् । यमाद्द१ता२यिः । चाहम्र्मा१दा२३ । या२पा
२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

॥ अभिनिधनं काण्वम् ॥ औहौहोहायि । आयाही ।
आत्वा । सा२३४हा । सामाम्रा२३४ताम् । यूक्तारा२३४थायि ।
हीरण्ययायि । ऐहोयि । आ२३४यिही । ब्रा५ह्मायू२३
४जो । हारायार२३४ई । द्राकेग्निनाः । ऐहोयि । आ

* ऊ० गा० १८प्र० २ख० १२गा० ।

२३४यिद्दो। वा इन्द्र२३४सो। मपा३यिता५या६५६यि॥(१)

औहोहोहायि। आयिहो। आत्वा। रा२३४थायि। हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया। ऐहोयि। आ२३४यिहो। आयितायिपा२३४र्ष्ठा। वा हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यिहो। वायिवक्ता२३४णा। स्पा३यिता५या६५६यि॥(२)

औहोहोहायि। आयिहो। पायिबा। तू२३४वा। स्यागिर्वा२३४णाः। सूतस्या२३४पू। र्वापाद्वा। ऐहोयि। आ२३४यिहो। पारिष्का२३४र्त्ता। स्यारासी२३४नाः। इयमासुतायि। ऐहोयि। आ२३४यिहो। चारुर्म्मा२३४दा। यपा३त्या५ता६५६यि। आ२३४भी(३)॥ ३ *॥ [३] ५

---

* ऋ० गा० ३३प्र० ३ख० ३गा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।

३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विजः! "आसोत" सोमम् अभिषुणुत [षुञ् अभिषवे (स्वा० उ०), लोटि छान्दसो (२, ४, ७२) विकरणस्य लुक्, "तप्तनप्तनथनाश्च (७,१,४५)"—इति तस्य तबादेशः]। किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ १ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने।

१ २ ३ २ ३ १ २ ३ १र १र ३ २ ३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

---

* छ० आ० ६, १, ४, ३ (२भा० १२८४०) = ऋ० वे० ७, ५, ३८, २।

† ऋ० वे० ७, ५, ३८, ३।

"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयो-दुहं" क्षीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमासुनुतेति पूर्वेण समन्वयः॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ॥ २ ॥ †

३र ४र ५र २र ३ ४ ५ ५
॥ वाचःसाम॥ आसोतापा। ह्योरिषिञ्चता ६ ए।
१ २ र १ ७ १ २ ७
आश्वन्नस्तो। मामप्रूरा२म्। राजस्तुरम्। वानप्रा
१ ४ २ ५
त्ता२३म्। ऊ२३दा३। प्रू२३४५तोई५ह्वाइ(१) ॥१ण॥ [१]

३र ४र ५र २र ३ ३ ५ ५
॥ वाचःसाम॥ आसोतापा। ह्वो। रिषिञ्चताई॥ए।
१ २ र १ ७ १ २ १ ७
आश्वान्नस्तो। मामप्रुरा२म्। राजस्तुरम्। वानप्रा
१ ॰ ४ २ ५ ३ ४ ५
त्ता२३म्। ऊ२३दा३। प्रू३४५तोई६ह्वायि॥(१) वनप्र
२ ३ ४ ५ ५ १ २ १ ७
त्ताम्। ह्वौयि। उदप्रुता६मे। साहस्रधा। राम्वृ

---

* 'जन्मवतां मूलभूताय'—इति वि०।

† ऊ० गा० १प्र० २ख० १मा०।

१र २ १ ७ १ ४
षभा२ । पायोदुग्धम् । प्रायन्दायिवा२३ । या२३जा३ ।

२ ५ ३ ४ ५र २ ३ ४ ५ ५
न्मा३४५नोई्हायि ॥(२) प्रियन्देवा । हो । यजन्मना६ए ।

१र १ १ ७ १ २२र १र १
आर्त्तेनयः । आर्त्तजाता२ । वायिवावृधे । राजादा

१ ४ २
१ यिवा २ ३: । आ २ ३ गा ३ म् । वृ३ ४ ५ हो ६

५
हायि(३) ॥ १७ * ॥ [२]

२र १र २ ४ ५ १ ३ ५ २
॥ सफम् ॥ आसोता३परि । षिञ्चा२३४ता । अ

१ २ १ १ २ ४ २ ५
श्वन्नस्तोमा२म् । अप्तु राꣳरा३जा३ । स्तु३२ ३ ४राम् ।

१ २ ४ २ ५ २ १ १
वना । प्रज्ञाम्३दा३ । प्र३४५नोई्हायि ॥(१) वनप्रा३

४ ५ २ ३ ५ २ १ १ १ १ २
क्षमु । दप्र२३ताम् । सहस्रधारा२म् । वृषभाया३

४ २ ५ २ १ र २ ४ २
यो३ । दू३२३४हाम् । प्रियाम् । देवाया३जा३ । न्मा

५ १ १ २ ४र ५ २ ३ ५
३४५नोई्हायि ॥(२) प्रियन्दे३वाय । जन्मा२३४नायि ।

२ १र २ १ १ २ ४ २ ५
ऋतेनयाआ२ । तजातो३वा३यि । वा३ २ ३ ४धायि ।

---

* ऊ० गा० ७प्र० १अ० १७सा० ।

२ १ १ १ ⁰ १र २ ४ २ ५
ऋतेनयाआ२। तजातोवा३यिवा३। वा३२३४र्डायि।
२ १र २ १ १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३। यि। वा३२३४र्डायि।
२ र १ र १ ४ २ ५
राजा। देवाआ ३ र्ता ३ म्। बृ३ ४ ५ हो ६हायि(३)
॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे —

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया।
१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतृ-
णामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा०।

† ऋ० आ० १, १, १, ४ ( १भा० ९८पृ० ) = ऋ० वे० ४, ५, २७, २।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ १ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।
१ २ ३ २ १ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यावौ अभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ १ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।
२ १ १ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

* "अचरन्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरं—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः! "विचर्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः॥ ३॥७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३२ ३ २ ३१ १ ३१ २
अस्यप्रेषाहेमनापूयमानो

३ २३ २३ १ २ ३१२
देवोदेवेभिःसमपृक्तरसम्।

३१ ३१११२३ १२
सुतःपवित्रम्पर्येतिरेभन्

३ २३१ २ ३२ ३ १ २
मितेवसद्मपशुमन्तिहोता॥ १*॥

"अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्;] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" ["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा० आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

* ऋ० आ० ६, १, ४, ४ (२भा० ११५पृ०) = ऋ० वे० ७, ४, ११, १।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यजमानगृहान् यथा पर्य्येति तद्वत्॥ १॥

अथ द्वितीया।

२ १ २र ३ २ १ २
भद्रावस्त्रासमन्याऽ३ऽवसानो

२ २ २ ३ १ २ ३ १ २
महान्कविर्न्निवचनानिशꣳसन्।

१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो

३ १ २र ३ १ २
विचक्षणोजागृविर्द्देववीतौ॥ २*॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्रामयोग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवचनानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीतिर्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्यागच्छ [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्]॥ २॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-सामलक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ २
समु प्रियो मृज्यते सानो अव्ये
३ १ २ ३ २ ३ १ २ ३ २
यशस्तरो यशसां क्षैतो अस्मे ।
२ १ २ ३ १ २ ३ १ २ ३
अभि स्वर धन्वा पूयमानो
३ १ २ ३ २ ३ १ २
यूयं पात स्वस्तिभिः सदा नः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम् †] हे सोम ! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

॥ ऊर्ध्ववायिवासिष्ठम् ॥ उर्ध्ववायि । अस्पा३ ४औ
होवा । प्रेषा । चे३मना । पूयमानाः । देवा३४औ
होवा । देवायि । भी३:सम । पृक्तारसाम् । सुता३

* ऋ० वे० ७, ४, ११, ३ ।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि० ।

२र र १ २ १ २ ३ ४ ५ १ १
४औहोवा । पवायि । आ३परि । एतिरेभान् । मिता

३र र ५ १ २ १ १ १ ४
३४औहोवा । वसा । आ३पप्रु । मा३४३ । तौ३हो

२ १ २र र४ ५ १ १ १
५ताई५६ ॥(१) भद्रा३४औहोवा । वस्त्रा । समनि ।

२ ३ ४ ५ २ १ ३र ४र ५ १ २ १
यावसानाः । मह्वा३४औहोवा । कवायिः । निवच ।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिग्र॒सान् । आवा३४औहोवा । च्यस्वा । चमुवोः ।

२ ३ ४ ५ ३ २ ३र ४र ५ १ २र १
पूयमानाः । विचा३४औहोवा । तणो । जागृविः ।

१ २ ४ १ २ २र ४र ५
दा३४३यि । वा३चा५यिताई५६उ ॥(२) समू३४औहोवा ।

१ २ १ र १ ३र ४ ५ ३ २ ३र ४र ५
प्रियो । मृज्यते । सानोअव्यायि । यशा३४औहोवा ।

१ १ १ र १ ३र ४ ५ ३ २ ३र ४र ५
स्तरो । यशसाम् । क्षैतोअस्मायि । अभा३४औहोवा ।

१ २ १ र २ ३ ४ ५ २ २ ३र २ ४ ३र
स्वरा । धनुवा । पूयमानाः । उऊवायि । यूया३औ

४र ५ १र २ १ १ २ ४
होवा । पाता । स्वस्ति । भा३४३यिः । सा३दा५

नाई५६(३) ॥ ६ * ॥ [१] ८

---

* ऊ० गा० ७प्र० २अ० ९सा०

अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२१ ११ १२ ३२ ३२३१ १
एतोन्विन्द्रꣳस्तवामशुद्धꣳशुद्धेनसाम्ना ।
२.१३१ १ ३१ १ ३२३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हत्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्धत्पादकेन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः । पश्चात् पूतायेन्द्राय यागादिकर्मणि सोमादीनि हवींषि च प्रादुरिति । एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो ऽमन्यत सोऽकामयत शुद्धमेवमात्मनं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति । तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव । आगत्य च "शुद्धेन" शुद्धत्पादकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उकथैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम । ततः "साम्ना" शस्त्रैश्च "वावृद्धांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्रं "शुद्धैः"

* ऋ० आ० ४, २, १, ८ (२भा० ७१४पृ० । =ऋ० बे० ६, ६, ११, २ ।

शुद्धात्वादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ माद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ १ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।

३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य ॥ २ * ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छन्तीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे ( दि० प० ) लोटि "बहुलञ्छन्दसि ( २, ४, ७६ )"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

* ऋ० सं० ६. ६, ३१. ३।

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १र २र ३ १ २
इन्द्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे।
३ १ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि॥ ३ * ॥ ९

हे "इन्द्र!" "शुद्धः हि" [—अवधारणे †] शुद्धएव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धत्वादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः]॥ ३ ॥९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विद्रंस्तवा३मा। शु
२ १ १ २ २ १र
द्धंशुद्धे। न। साम्ना२। शुद्धायिहु३क्था३यिः। वा
३ ५ २ १र २ १ २ १
वा२द्धा२३४ंसाम्। शुद्धैरा२३श्री। वान्ममत्तु। इडा

* ऋ॰ वे॰ ६, ६, ११, ४।

† 'हि तस्मादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय'—इति वि॰।

‡ 'सिषासति—साधयसि'—इति वि॰।

२३ ॥(१) इन्द्रयुद्धोनआगा३ह्वो। युद्ःयुद्धा। भिह्व। तायिभा२यिः। युद्धोरा३यो३म्। निधा२रा२३४या। युद्धोमा२३मा। धीसोमिय। इडा२३ ॥(२) इन्द्रयुद्धो विनोरा३योम्। युद्धोरत्नानिदा। युषा२यि। युद्धो वा३र्त्वा३। णिजा२न्वा२३४सायि। युद्धोवा २ ३ जाम्। सायिषासमि। इडा २ ३ भा ३ ४ ३। ओ २ ३ ४ ५ई। डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

अग्ने स्तोमम्मनामहे सिद्धमद्य दिविस्पृशः।

देवस्य द्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २ख० १२सा०।

† ऋ० सं० ४, १, ५, २।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्ध" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ २ ३ १२ २२ १ २

अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।

१ २ ३ १ ३ १ २

सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २

'त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।

१ २ ३ १२ २२

त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

---

* ऋ० वे० ४, १, ५, ३।

† 'दैव्यं जनं—देवानां समूहं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने!" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि [ तथाहि यास्कः— "सप्रथाः सर्वतः पृथुः (निरु० नै० ६,७)"—इति ]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

३ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा
३ २ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी।
२ ३ १ २ ३ १ २ ३ २उ ३
वनावसानोवरुणोनसिन्धु-
१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते। "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत्।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि०।

† 'पवमसाकः सम्यत्या मध्यन्दिनम्'—इति वि०।

‡ ऋ० आ० ६, १, ४, ६ ( २भा० १२० ऋ० )=ऋ० वे० ७, ३, २६, २।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्य्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः॥

"अङ्गोषिणम्"-"अङ्गूषाणाम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ १ २
शूरग्रामःसर्ववीरःसहावान्

१ २ ३ १ २ ३ १ २
जेतापवस्वसनिताधनानि।

३ १ २ ३ १ ३ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्

२र ३ १र ३र ३ १ १
स्वषाढःसाह्वान्पृतनासुशत्रून्॥ २*॥

हे सोम! त्वं "पवस्व"। कीदृशस्त्वम्? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन्। कुत्र? "पृतनासु" शत्रु-सेनासु। कान्? "शत्रून्"॥ २॥

---

* ऋ० वे० ७, ३, २६, ३।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि०।

अथ तृतीया ।

३ १ २ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्
२ ३ १र २र ३ १ २
समीचीने आपवस्वापुरन्धी ।
१ १र १र ३ २ ३ १र १र
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः
२र ३ २ ३ २ ३ १ २
सञ्चिक्रदोमहो अस्मभ्यंवाजान् ॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर। "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दय। "महः" महतः महान्ति "वाजान्" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ ११

२ १ ५ २ ३र २
॥ सम्भावैयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।
१ ५ २ २ २ २ १ २ ३
इयार । ओ३हा३इ । अभित्रिपा । छर३वुष । णम्व

* "स्व"—इति क० पाठः ।

† ऋ० वे० ७, १, २६, ४ ।

‡ 'पुरं धारयितः'—इति वि० ।

¶ 'चिक्रदः—शब्दं कुर्वन्—इति वि

योधाम्। अङ्गोषिणाम्। अवाव। अग्नवाणीः। व
नावसा। नो३वह। णोनसिधूः। विरत्नधाः। हृय
ते। वा३४३। रीया५णा६५६यि ॥(१) प्रूरग्रामाः।
सर्ववी। रःसहावान्। जेतापवा। स्वा३सनि। ता
धनानी। तिग्मायुधाः। क्षिप्रध। न्वासमत्सू। अषा
ढःसा। ह्वा३न्यृत। ना३४३। सूह्वा५न्१५६म् ॥(२)
उरुगव्य। ती३भर। यानिह्ळपवान्। समीचीने।
आह्पव। स्वापुरन्धी। अपःषिषा। सा३नुष। सः
सुवर्गाः। ओ३हायि। ओ३वा। ओहा। हुया२।
ओ३हा३ए। सच्चिक्रदो। महोष। मा३४३। भ्या
वा५जा६५६न्(३) ॥ १७* ॥ [१] ११

---

* ऋ० मं० ७अ० १व० १०ऋ०।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।
२ ३ १ २ १ २उ ३ १ ३ १ २ ३ १ २
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः॥ १*॥

हे "इन्द्र! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि। कथमस्य यशस्वित्वं? तदाह— "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एक इत्" एक एव असहाय एव "चर्षणीधृतिः" रक्षकत्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि। अतएवास्य यशस्वित्वम्॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"न एक इदनुत्ता चर्षणीधृता"—इति च॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ १ ३ १ २
तमु त्वा नूनमसुर प्रचेतसꣳराधो भागमिवेमहे।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्॥ २†॥१२

---

* ऋ॰ आ॰ ३, २, १, ६ (१ भा॰ ६,१२४४०)=ऋ॰ वे॰ ६, ६, १३, ५।

† ऋ॰ वे॰ ६, ६, १३, ६।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ" [—इत्यव-धारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा, कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्ति यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, दुर्गः] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृत्तिर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)]॥ २॥ १२

॥ अभीवर्त्तम्॥ तुवा३मा३यिन्द्रयशा३सोवा। आ ज्योषौ३। वसास्या१ता२यिः। हुवम्त्त्वा३१२३४। गि च्(?)स्प्रतीनिए। कआयित्पू१रु२। अनूत्ता१श्वार२। षणा३यि। धा२३४५। ता२३४५यिः॥(१) अनू३त्ता३श्व

* 'निश्चितम्'—इति वि०।

५र ४ ५ १ २ १ २ १
र्षणीधृतोवा। आनुत्तस्य। यणायिधा१र्त्ता२यिः। ता

र २ ३ ४ ५ २ १ २ र १
मुत्वानू३१२३४। नमस्तुर। प्रचायिता१सा२म.। राधो

२ ३ २ १ ३ १ १ १ १
भा१गा२म्। इवा३यि। मा२३४५। हा२३४५यि ॥(२)

५र ४ २ ४ ५र ४ ५ १ र २र १ २
राधो३भा३गमिवेमहोवा। राधोभागम्। इवायिमा१

१ र १ ३ ४ ५र १ १ २
हा२यि। माहोवका३१२३४। तिःशरणा। तआआ१

१ २ ३र १ १
यिन्द्रा२। प्रतायिह१स्ना२। नोआ३। आ२३४५।

३ १ १ १ १
वा२३४५न्(३) ॥ १८* ॥ [१]

२ १ ४ ५र
॥ द्विहिङ्कारम्वामदेव्यम्॥ तुवमा२३यिन्द्रयशाअसा

१र र र र
यि। आज्जीषीशवसस्पतिस्त्वमवृत्राणिहꣳस्यप्रतीनआयि

१ ३र २ १ १ १ १ १ ३र २
कओहो३। ऊम्मा२। पू२३ह। अनुत्तआर्षणीहो३।

१ १ ४ ५ १ १ ४
ऊम्मा२। धृतायिः। औ२३होवा ॥(१) अनुत्ता२३च

५र १ र रर २
र्षणीधृतायिः। आनुत्तश्चर्षणीधृतस्तमुत्वानूनमस्तुराऽप्र

* ऊ० गा० ७प्र० २अ० १८सा०।

३र २ १ १ २ १र र र २ ३र
चोहोइ। ऊम्मा२। ता२३साम्। राधोभागाऽमिवी
२ १ १ २ ४ ५ २र१र
होइ। ऊम्मा२। मघा। औ३होवा॥(२) राधोभा
४ ५र १ र र र र र
३गमिवेमघायि। राऽधोभागमिचेमघेमहीवक्षिः शरणा
२ ३र २ १ १ २ १ र २
ऽसचौहोइ। ऊम्मा२। आ२३यिन्द्रा। प्रतेसुम्नाऽन
३र २ १ १ ४ ५ ४
चौहोइ। ऊम्मा२। अवान्। औ२३होवा। होऽ५इ।
डा(३)॥ ७ *॥ [२]

१ २ १ २ १र २ र
॥ यज्ञम्॥ त्वमिन्द्रा। यशाः। असायि। ऋजी
१र २ १ २ १ २ ३ २ १ र
षीअवसः। पतायिः। त्वम्वृत्राणी३ह०सिया। प्रती
१ २ १ ३ ५र र
नाए२। कद्रःपूर्व२होइ। तस्व। धा२णा२३४औहो
३ ५ १ २ १ २ १र
वा। धा२३४र्त्ताः॥(१) अनुत्तस्वा। अनुत्तस्वा। धर्णी।
२ र १ २ र २
धृतायिः। अनुत्तस्वर्षणी। धृतायिः। तमुत्वानू३नम
३ २ १ १ १र
सुरा। प्रावा२यि। तासा२म्। राधा२हो१यि।

ऋ० गा० १६प्र० २ख० ७गा०।

र २ १ २ ५र र २ ५
भागम्। आ२यिवा२३४औहोवा। मा२३४हे॥(२)

१र२र १ २र र र १र र र
राधोभागाम्। राधोभागाम्। इवे। महायि। राधो

२र १ २र २ २ र २३२ १
भागमिवे। महायि। महीवका३र्त्तिःशरा। णाता२

१ १ २र २
यि। आयिन्द्रा२। प्रता२यिहो१यि। सुम्रा। नो२

३ ५र र ३ ५
आ२३४औहोवा। आ२३४वान्(३)॥ १४ *॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २र ३ १ २
यजिष्ठन्त्वाववृमहे देवन्देवत्राहोतारममर्त्त्यम्।

३ २ ३ १ २ ३ १ २
अस्ययज्ञस्यसुक्रतुम्॥ १ †॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

---

* ऊ० गा० १८प्र० २ख० १४गा०।

† ऋ० आ० २, १. २, ६ (१अ०। १८३ प०)=ऋ० वे० ६, १, १६, १।

अथ द्वितीया।

१ १ २र ३ १ २ ३ १ २ ३ २३ १ २
अपान्नपातꣳ सुभगꣳ* सुदीदितिमग्निमु श्रेष्ठ† शोचिषम्।
१ २ ३ २ ३ १ २ ३ १ ३ २उ ३ १ २ ३ २
सनो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नपातं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्य ओषधि-वनस्पतयस्तेभ्य एव जायत इति चतुर्थत्वम्§। "नभ्राण्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभन धनं "सुदीदितिं" सुष्ठु दीप्यन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु॥ २॥ १३

३ ४ २ ४ ५
॥ साध्यम्॥ या ऽ ५ जि। छन्त्वा ३ वा ३ वा ३ वृमद्यायि।
२र १ र २र २ १ १ १ ७
देवन्देवत्राहोतार३ राम्। आमर्त्तियम्। आश्रयाया॥

* "ऊर्जोनपातं"—इति ऋ० पाठः।

† "अग्निमीड"—इति च ऋ०-पाठः।

‡ ऋ० वे० ६, १, २९, ४।

¶ ऋग्वेदीयपाठमवलम्ब्येदं व्याख्यानम्।

§ "अपां नपातम्—अपां पौत्रमग्निम्। अपो पुत्रका वृक्षाः, तेषु जातं पुत्रं पौत्रम्"—इति वि०।

१ ४ २ ५ २
२३। स्थार२३सू३। क्रा३४५तोइ्वायि ॥(१) आऽ५प्र।
४ २ ४ ५ २ १र र २ १र
यज्ञा३स्या३सुक्रतूम्। अपान्नपातꣳसुभार२३गाम्। सुदी
२ १ ७ १ ४ २
दितिम्। आग्निमूश्रे२३। ष्ठा२३श्रो३। चा३४५यिषो
५ २ ४ २ ४र ५ १
इ्हायि ॥(२) आऽ५ग्निम्। उश्रे३ष्ठा३श्रोचिषाम्। स
र २ १ र २ र १ ७
नोमित्रस्यवरु२३णा। स्यासोअपाम्। आसुम्नाया२३।
१ ४ २ ५
आ२२ता३यि। हा३४५यिवोइ्वायि(३) ॥ २* ॥ [१]

॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वावृमाहायि। देवन्देव
२ २ २ १ २ २ १ २
र र र
माहोतारममर्त्यम्। अस्ययज्ञस्यसुइ्हा। अस्ययज्ञ
१ ५ ४ ५
स्यसूऽइ्हा। जयायि। जवो२३४वा। क्रा५तोइ्हा
२ १ २ १र र
ये ॥(१) अपायज्ञस्यसुक्रातूम्। अपान्नपातꣳसुभगꣳ
र र र र र
सुदीदितायिम्। अग्निमुश्रेष्ठश्रोइ्हा। अग्निमुश्रेष्ठाश्रो
५ ४ ५
इ्हा। जवायि। जवो२३४। वा। चा५यिषोइ्हा

* ऊ० गा० ८प्र० १ष० ३गा०।

१ २ २ १ १ २
यि ॥(२) अग्निमुग्रेष्ठशोचायिषाम् । सुनोमिवस्यवहुष
२ २
सोषपाम् । आसुत्वंवश्रताऽइहा । ऊवायि । ऊवोर
५ ४ ५
३४ । वा । द्वा५यिवोईहायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे—

यमग्न इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १उ ३ १ २ १ २ ३ १ २ ३ २
यमग्नेपृत्सुमर्त्त्यमवावाजेषुयञ्जुनाः ।
२उ ३ १ २ ३ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्त्यं" यजमानम्
"अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु
"जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्न-

---

* ऊ० गा० १८प्र० १ख० ३गा० ।

† "ताहा"—इति बङ्गपत्रिकः पाठः ।

‡ ऋ० वे० १, १, २३, २ = य० वे० ६, २९ ।

आनि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पद्दादिषु मांसपृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः. "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्ययः, यद्वा लेटाडागमः, "इतश्च (३,४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यडागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्स्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ . ३१र २र
नकिरस्य सहन्त्य पर्येता कयस्य चित्।

१ २ . ३ १ २
वाजो अस्ति श्रवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २॥

---

* ऋ० वे० १, १, २३, १।

† 'वाजमन्नं'—इति वि०।

अथ तृतीया ।

१२ १२३१२ ३१२ ३१२
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता ।
१२ ३१२
विप्रेभिरस्तुसनिता ॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम् । अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः । तरुता—तॄ प्लवन-तरणयोः (भ्वा० प०), अस्मात् "असित-स्कभित-( ७, २, ३४ )—इत्यादौ तृजन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, १, १३, ४ ।

† 'विश्वस्य द्रष्टा'—इति वि० ।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि० ।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि० ।

अथ साकमुक्ष इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ १२ २ १ २ २
साकमुक्षो मर्जयन्त स्वसारो
२ २ १ २ १ २ २ १ २
दश धीरस्य धीतयो धनुत्रीः।
२ २ १ २ २ १ र १ र २
हरिः पर्यद्रवज्जाः सूर्यस्य
१ २ २ २ २ २ १ २
द्रोणं ननक्षे अत्यो न वाजी॥ १*॥

"साकमुक्षः" सह युगपत् सिञ्चन्तः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोधनालङ्करणयोः (अदा० प०)]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [अङ्गुलि-नामैतत् (निघ० २, ५, ७)] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [सूर्यस्य तेजसा हि आविर्भवन्तीति दिशां तस्य जायात्वम्] "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्षे" व्याप्नोति [नक्षतिर्व्याप्ति-कर्मा (निघ० २, १८, २)]॥ १॥

---

* उ० आ० ६, १, ५, ६ (२भा०, १२६पृ०) = ऋ० वे० ७, ४, २, ८।

अथ द्वितीया ।

२ ३ १ २ २र ३ १र
सम्मातृभिर्न्नशिशुर्वावशानो

२र ३ १ २ ३ १
वृषादधन्वेपुरुवारोअद्भिः ।

२ ३ १र २र३ १ २ ३ १र
मर्योनयोषामभिनिष्कृतंयन्

२र ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते। तत्र दृष्टान्तः— "मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प०) कर्म्मणि लिटि रूपम्] "मर्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [गमेरकर्मकात् "समोगम्यृच्छिभ्याम् (१, ३, २९)"—इत्यात्मने पदम्॥ २ ॥

* ऋ० वे० ७, ४, ३, २ ।

† 'आदित्यरश्मिभिः'—इति वि० ।

अथ तृतीया ।

१ १२ २२ ३ २ ३ १ १ २ २
उतप्रपिप्यऊधरघ्न्याया

२ ३ १ २ ३ २
इन्दुर्धाराभिःसचतेसुमेधाः ।

३ १ २ २ ३ १ २ ३ २ ३ १
मूर्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो-नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्याययति [प्यायतेर्लिटि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते । ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः—"निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, ३, ३ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि० ।

॥ इन्द्रवद्वासिष्ठम् ॥ औहोवाहा ३ होयि । इन्द्रा ।
साकमुक्थो । मर्ज्जय । तक्षसाराः । दश्रधीरा । स्था
३धीतु । योधनुनीः । हरिःपर्यी । द्रवज्जाः । हरि
यस्था । द्रोणाननना । खे३पति । यो३४३ । ना३वा५
जा६ ५ ६यि ॥(१) सम्मातुभायिः । नप्रिशुः । वावशा
नाः । वृषादधा । न्वे३पुरु । वारोषद्भायिः । मर्यो
मयो । षा३मभि । निष्कृतंयाम् । सङ्क्षृतायि । क
लशे । ऊ३४३ । स्तो३या५भा६५६यिः ॥(२) उतप्रपायि ।
प्या३ऊधः । अघ्नियायाः । इन्दुद्वारा । धी३ःसच ।
तेसुमेधाः । मूर्द्धानङ्गा । वा३ःपय । साचमप्सु । औ
होवाहा३होयि । इन्द्रा । गौभिश्रीणा । ती३वसु । भा
३४३यिः । ना३ना५यिक्ष्मा६५६यिः(३) ॥ ७ ॥ [१]

* ऊ० गा० ८प्र० १ख० ७सा० ।

॥ पार्थम् ॥ ओ३हो३होयि। साकमुक्षी। मर्ज्ज
य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु
औः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न
ना। ते३अति। यो३४३। ना३वा५जा६५६यि ॥(१)
सम्मातृभायिः। नशिशुः। वावशानाः। वृषादधा।
न्वे३पुरु। वारोअद्भायिः। मर्य्योनयो। षा३मभि। नि
ष्कृतंयान्। सङ्गच्छतायि। कलशे। ऊ३४३। स्री
३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अघि
यायाः। इन्दुर्द्धारा। भो३:सच। तेसुमेधाः। मूर्द्धा
नङ्गा। वा३:पय। साचमृष्। औ३हो३होयि। अभि
श्रीणा। ती३वसु। भा३४३यिः। ना३ना५यिक्ता६५६
यिः(३) ॥ ८ ॥ [२]

* ऊ० गा० १२प्र० १अ० ६सा०।

॥ औशनम् ॥ साकाम्। उत्सोमर्ज्जयन्ता। स्वसा
३राः। दशधीरा। स्योऽ३धीत। योधनुचीः। ह्वरिः
पर्यद्रवज्जाःसू। रियार२३स्या। द्रोणन्नना। सो३अति।
यो३४३। ना३वा५जा६५६यि ॥(१) साम्मा। तृभिर्म
शिप्रुर्वा। वशाऽ३नाः। वृषाटधा। न्वं३पुरु। वारो
चक्राायिः। मर्य्यीनयोषासभिनायिः। कृतार२३यान्।
सकृच्छतायि। कलशे। ऊ३४३। सी३या५भा६ ५ ६
यिः ॥(२) ऊता। प्रपिप्यऊधरा। पिया३याः। इन्द्र
हीरा। भी३:सच। तेसुमेधाः। मूर्द्धानङ्गावःपयसा।
चमू२३षू। अभिश्रीणा। ती३वसु। भा३४३यिः। मा
३ना५यिक्षा६५६यिः(३) ॥ ४ ॥ [३] १५

* ऊ० गा० १८प्र० २ख० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्।—

तत्र प्रथमा।

१२ ३१२३२३१२ ३१२
पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः।
३१२ ३१२२२ १२ ३१२
आपिर्नोबोधिसधमाद्येवृधे ऽ३ऽस्माँ ऽ अवन्तुतेधियः॥१*॥

हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोविकारैः पयः-प्रभृतिभिः श्रपण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदान-त्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" तृप्तो भव। अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ॥ १॥

अथ द्वितीया।

३१२ ३२३ ११ ११२ २२ ३१२
भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये।
२२२१२ ३१२३१२ २१२
अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय॥२†॥१६

* ऋ० सा० ३, ४, ७ (१मी० ४८४२०) = ऋ० वे० ५, ७, २५, १।

† ऋ० वे० ५, ७, २५, २।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः * तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्रा० प०) माङि लुङि छान्दसस्तु लुक् ]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०) ]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयताम् कुरु सर्वदा सुखिन एव कुरु ॥ २ ॥ १६

॥ अभीवर्त्तम् ॥ पिबा३सू३तस्यरसिनोवा। मात्स्वान इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा। दियेवा१हा२यि। अस्मा२आ१वा२। तुता३यि। धा२३४५। या२३४५ः ॥(१) अस्मा२३आ३वन्तुतेधियोवा। आस्मा२अव।. तुतायिधा१या२ः। भूयामता३१२३४ यि। सुमतौवा। जिनोवा१या२म्। मानास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'आपयेत्यर्थः'—इति वि०।

३ २ १ ३ १११११ ५र ४ २
भिमा३। ता२३४५। या२३४५यि॥(२) मान्ना२स्ता३

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। मास्ता

२ ३ ४ ५र २ १ २
भ्चिन्ना३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३ २ १ १ १ १
आनाःस्त१स्ना२यि। ष्टुया ३। मा २ ३ ४ ३। या २ ३

१ १
४ ५(३) ॥ ८* ॥ [१]

४ १र ४ ३ ४ ५ ४ ५ र ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नष्मा

१र ४र ५ १ १र २
३४औहोवा। द्रगोमताऽ२ः। हा३१उवा२३। ऊ३४

५ ३र १ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।

१ र १ १र २ ५ ३ २
दियेवाहूं। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ ३ २ ४
३०अव। औहोवाहायि। तुमा३यिधा५या६५६ः॥(१)

४ ३र ४ र ५र र ३ २ ३र ४ ५
अस्मा०अवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।

१ १र २ ५ ३ २र ४
तुतेधियाऽ२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १अ० ८सा०।

ता । औहोवाहायि । हमतीवा । जिनोवायम् । हाउ१उवा२३ । ऊ२३४पा । मानाउ३स्तर । औहोवाहा यि । भिमाउ३तापुयाउ६५६ ॥(२) मानस्तरभिमातये । मा नः । स्तराउ३४औहोवा । भिमातयाऽ२यि । हाउ१उवा २३ । ऊ ३ ४ पा । अस्माउ३म्भित्रा । औहोवाहायि । भायिरषतात् । अभिष्टायिभिः । हाउ१उवा । ऊ२३४ पा । आनाउ३ःसुम्ने । औहोवाहायि । घुयाउ३मापुया उ६५६ । ऊ२३४५(३) ॥ १५* ॥ [२]

॥ निषेधम् ॥ पिबासुतस्याउ३रसिनाः । मत्स्वानआ यि । इन्द्रगोमता२ः । इहाउ३ । आपाउ३यिर्नौवो । हा वो२३४वा । भायिसधमा । दियेवार३ह्वायि । इहाउ३ । आआउ३ऽआवा । हाहो२३४वा । तुताउ३यिधापुयाउ६५

* ऊ० गा० १२प्र० १ख० १५सा० ।

ई:। अस्मा०अवन्तू३तेधियाः। अस्मा०अवा। तुतेधि

या२:। इहा३। भूया३मातायि। हाहो२३४हा। सू

मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।

हाहो२३४हा। भिमा३तापूयाई५ईयि॥(२) मानस्तर

भी३मातयायि। मानास्तरा। भिमातया२यि। इहा

३। आस्मा३च्चायिवा। हाहो२३४हा। भायिरवतात्।

अभिष्टा२३यिभायिः। इहा३। आना३:स्मायि। हा

हो२३४हा। सुया३मापूयाई५ई। हे२३४५(३)॥१६*॥[३]

॥ पुष्ठम्॥ पिबा३सुतस्यरसिनाः। मत्स्वानइन्द्रगो

मता२३होइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ ओइ

या। अस्मा०आ२३वा। तुतायिधा२३या ३ ४ ३:॥(१)

अस्मा३०अवन्तुतेधियाः। अस्मा०अवन्तुतेधियार ३ओ

* ऊ० गा० १२प्र० १अ० १६सा०।

इया। भूयामतेसुमतौवाजिनोवया२३ऽ५होइया। मा
नस्ता२३रा। भिमाता२३या३४३यि ॥(२) माना३स्तर
भिमातयायि। मानस्तरभिमातया२३यिहोइया। अस्मा
श्चित्राभिरवतादभिष्टिभा२३यिहोइया। आनःसू२३म्ना
यि। षुयामा२३या३४३। ओ२३४५ई। डा(३) ॥१२*॥[४]

॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ।
ना२ः। इन्द्रा२गोमता२३ः। हाउ। आपिना२वो।
धिसाधमा२। दियेवृधा२३। हाउ। अस्माऽ५अवा
२३। हा। तुते३होर। या२३४औहोवा। धियञ्ज
२३४५ ॥(१) अस्माऽ५अवन्तुतेधियोस्मान्हाउ। आ२।
वन्तू२तेधिया२३ः। हाउ। भूयामा२ते। सुमतौवा
२। जिनोवया२३म्। हाउ। माना३स्तरा२३। हा।

* ऊ० गा०, १६प्र० ९ख० १९गा०।

भिमा३होर। या२३४औहोवा। तयज्ञ २ ३ ४ ५॥(२)

मानस्तरभिमातयेमानोहाउ। स्ता२:। अभा२यिमा

तया२३यि। हाउ। अस्माभ्या२यित्रा। भिरावृता२

त्। अभिष्टिभा२३यिः। हाउ। आनाःसुम्ना २ ३ यि।

हा। षुया ३ हो २। या २ ३ ४ औहोवा। मयज्ञ

२ ३ ४ ५(३)॥ १९* ॥ [५] १६

अथ त्रिरस्मैसप्तेति त्र्यृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

त्रिरस्मैसप्तधेनवोदुदुह्रिरे

सत्यामाशिरम्परमेव्योमनि।

चत्वार्यन्याभुवनानिनिर्णिजे

चारूणिचक्रेयदृतैरवर्द्धत॥ १† ॥

---

* ऊ० गा० १८प्र० २अ० १६सा०।

† ऋ० आ० ६, १, २, ७ (२सा० १८८४०) = ऋ० वे० ७, २, ३३, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्"आश्रयमाणं "दुदुह्रिरे", दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः"अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्व्येव्योमनि"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २
सभक्षमाणोअमृतस्यचारुण

३ २उ ३ १ २ ३ १ २
उभेद्यावाकाव्येनाविशश्रथे।

१ २ ३ २ ३ २ ३ १ २ ३
तेजिष्ठाअपोमंहनापरिव्यत

१ २ ३ २ ३ १ २ ३ १ २ ३१
यदीदेवस्यश्रवसासदोविदुः॥ २*॥

---

* ऋ० वे० ७, १, १३, २।

"सः" "भक्षमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् ( २, ३, ६२ )"—इति षष्ठी ] चारूदकं भक्षमाणः [ इकारलोपश्छान्दसः ( ३, ४, ९७ ) ] भिक्षमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [ द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते ] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहतकारातिशयेन निमित्तेन प्रक्लेनोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "अवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [ विद ज्ञाने ( अदा० प० ) "सिजभ्यस्त ( ३, ४, १०९ )"—इति झेर्जुसादेशः॥

"भक्षमाणः"-"भिक्षमाणः"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १
ते अस्य सन्तु केतवो मृत्यवो ·

२ ३ १ २ ३ १र २र
दाभ्यासो जनुषी उभे अनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'अवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ १र २ १
येभिर्नृम्णा च देव्या च पुनत

२र २ १ २
आदिद्राजानम्मनना अगृभ्णत ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्व्वैः स्ताघनीया रश्मयः। कीदृशाः? "असृत्यवः" मरण-धर्म्म-रहिताः अत एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"— इति ण्यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सश्चुः" रक्षन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यज्ञः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मनना:" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः॥ ३ ॥१७

५र ४ ५र ४ ५र २
॥ मारुतम्॥ १ आ२ ३ ४यिः। अश्वैसप्तधेनवोदुहौ।

४ ५ २ १र २ २ र १
चोऽङ्ङायिरायि। सत्यामाशिरम्परमायि। वियोमानी२।

* ऋ० वे० ७, १, २३, ३।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

१२ र २ १ २ २
चत्वार्य्यन्याभुवना। निनिर्णायिजा२३यि। चारूणार२३
५ १२१ १२ ५ २ ४ १
४यिवा। क्रेयहतैः। आवा३ह्वा५ताई५६॥(१) सा२३
५ र र ४ ५ र ४ ५ १ र र र र
४ः। भत्तमाणोअमृतस्यचौ। चारूणाः। उभेद्यावाका
र २ २ र र र २
व्येना। विश्वआथा२यि। तेजिष्ठाअपोमध्हना। परि
२ ३ ५ २ १ १र १ २
व्याता२३। यादीदा२३४यिवा। स्यश्रवसा। सादो३
४ १ ५ र ४ ५र र
वा५यिदू६५६ः॥(२) ते२३४। अस्यसन्तुकेतवोअमौ।
४ ५ १ र र र २र १ १र
होर्त्त्यावाः। अदाभ्यासोजनुषी। उभेआनू२। येभि
र र २ १ २ ३ ५
नृम्णाचदेव्या। चपुनादा२३यि। आदिद्रा२३४जा।
२१ २र १ २ ३
नम्मनना:। आगा३म्णा५ता६५६(३)॥ १२*॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः॥ ५॥

---

* ज० गा० ८प्र० १अ० १२सा०।

अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो
२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।
३ १र २र ३ १२ ३ २
अभीनरन्धीजवनंरथेष्ठा
३ १ ३ १२३१२
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ । किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ] । तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

* ऋ० वे० ७, ४, २०, ४ ।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि० ।

अथ द्वितीया ।

३ १ १र ३ १ १ २ ३ ३ ३ १ ३ १ २ ३ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम !" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय । किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय । अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय । तथा हे "देव" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३१ २ ३ १ २ ३क १र ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम ! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

---

* ऋ० वे० ७, ४, १०, ५ ।

† 'चन्द्राणि—कान्तानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'—इति वि० ।

¶ ऋ० वे० ७, ४, २१, १ ।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एवमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्र द्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ]॥ ३ ॥ १८

२ २ २ १र २
॥ पार्थम् ॥ ओ३हो३होयि। अभिवायूम्। वी३
१ २ ३ ४ ५ २ १ २ १ र २ ३ ४ ५
तिप। षागृणानाः। अभिमित्रा। वरुणा। पूयमानाः।
२ र १ ३ १ २ ३ ४ ५ १ १
अभीनराम्। धी३जव। न२रथेष्ठाम्। अभिइन्द्राम्।
२ १ २ २ ४
वृषणाम्। वा ३ ४ ३। आ३वा५ऊ ६ ५ ६ म् ॥(१)
२ १ २ १ २ ३ ४ ५ २ १र १ १
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। स्वदु
र २ ३ ४ ५ २ १ २ १ र २ ३४
घाः। पूयमानाः। अभिचन्द्रा। भर्त्तवम्। नोहिर
५ २ १ २ १ २ २ ४
ण्या। अभियश्वान्। रथिनः। दा३४३यि। वा३सो

२ २ १२ २ १ २३४ ५
पूमा६५६ ॥(२) अभीनोआ। पा३दिवि। यावहमी।
२ १ २ १ २ १२३४ ५ २ १२
अभिविश्वा। पा३र्थिवा। पूयमानाः। अभियेना।
२ १ १ २ ३ ४ ५ २ २ २ १२
द्रविणाम्। अश्नवामा। औ३हो३होयि। अभियर्ष।
२ १ २ १ ४
या ३ जमत्। आ ३ ४ ३। मा ३ यिवा ५ न्ना ६ ५ ६ः
(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथाइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१२ २२ ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय।
१ २ ३ १ २ ३ १ २ ३ १२ २२
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम्॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे "मघवन्" मंहनीय-धनवन्! "इन्द्र!" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

* ऊ० गा० ८प्र० २अ० १४सा०।

† 'उक्थोऽभिप्लवः। उक्थः इष्टाः। उक्थोऽभिजित्। इदानीं स्वरसामानः'—इति वि०।

‡ ऋ० वे० ६, ६, ११, ५।

¶ 'अपूर्वगुण!'—इति वि०।

§ 'वृत्रघ्न्य इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्देयं इति वाक्यशेषः'—इति वि०।

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृढामकरोः। "उत" अपि च "त्वत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्येति पदम्] ॥

"उतोऽदिवम्"-"उतद्याम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र<br>
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः।<br>
१र २र ३ १ २ ३ २ ३ १उ ३ १ २<br>
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥ २* ॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत्। "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा॰प॰) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत। किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति, "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १र २र ३ १र २र ३ २<br>
आमासु पक्वमैरय आ सूर्य्यं रोहयो दिवि।<br>
३ १र २र ३ २ ३ २ ३ १ २ ३ २<br>
घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ ३ † ॥ १९

---

* ऋ॰वे॰ ६, ६, १२, ६।    † ऋ॰वे॰ ६, ६, १२, ७।

